## अभ्यासः – 93

**2.1.5 ईकारान्तस्त्रीलिङ्गशब्दानां त्रिषु वचनेषु द्वितीयाप्रयोगाः**

✍ **एकस्मिन् वाक्ये एकम् एव कर्मपदं प्रयुज्य प्रदत्तं वाक्यं पुनः लिखन्तु–**
[ एक वाक्य में एक ही कर्मपद का प्रयोग करते हुए दिये गये वाक्य को पुनः लिखिए।
Re-write the given sentences by using only one object in one sentence. ]

यथा– I. **यूयं नगरीं प्रदर्शनीं नदीं मयूरीं नारीं देवीं च पश्यथ।**

1. यूयं...... ....नगरीं...... ...पश्यथ.....।
2. ......... ............... .............।
3. ......... ............... .............।
4. ......... ............... .............।
5. ......... ............... .............।
6. ......... ............... .............।

II. **यूयं नगर्यौ प्रदर्शन्यौ नद्यौ मयूर्यौ नार्यौ देव्यौ च पश्यथ।**

1. ......... ............... .............।
2. ......... ............... .............।
3. ......... ............... .............।
4. ......... ............... .............।
5. ......... ............... .............।
6. ......... ............... .............।

III. **यूयं नगरीः प्रदर्शनीः नदीः मयूरीः नारीः देवीः च पश्यथ।**

1. ......... ............... .............।
2. ......... ............... .............।
3. ......... ............... .............।
4. ......... ............... .............।
5. ......... ............... .............।
6. ......... ............... .............।

## अभ्यासः – 94

**ईकारान्तस्त्रीलिङ्गशब्दानां द्वितीयारूपाणि**

✍ **उदाहरणानुसारं रूपाणि लिखन्तु–**

[ उदाहरणों के अनुसार रूपों को लिखिए। Write forms (Rupas) as shown in the examples. ]

उदा० – 1. नगरी ⟶ नगरीम् ....नगर्यौ.... ....नगरीः.... ।

2. पार्वती ⟶ पार्वतीम् ....पार्वत्यौ.... ....पार्वतीः.... ।

3. काशी ⟶ ......... ............... ............. ।

4. मयूरी ⟶ ......... ............... ............. ।

5. देवी ⟶ ......... ............... ............. ।

6. [illegible] ⟶ ......... ............... ............. ।

7. कादम्बरी ⟶ ......... ............... ............. ।

४. कौमुदी ⟶ ......... ............... ............. ।

9. नलिनी ⟶ ......... ............... ............. ।

10. राक्षसी ⟶ ......... ............... ............. ।

11. शङ्करी ⟶ ......... ............... ............. ।

12. मानिनी ⟶ ......... ............... ............. ।

13. नखरञ्जनी ⟶ ......... ............... ............. ।

14. सरस्वती ⟶ ......... ............... ............. ।

15. विद्यार्थिनी ⟶ ......... ............... ............. ।

16. गृहिणी ⟶ ......... ............... ............. ।

# अभ्यासः – 95

**ई० स्त्री० शब्दानां द्वितीया एक० / बहु० रूपाणि**

**अग्रे लिखितानां शब्दानां द्वितीयायाम् एकवचने बहुवचने च रूपाणि लिखन्तु–**
[ अधोलिखित शब्दों के द्वितीया विभक्ति के एकवचन और बहुवचन में रूपों को लिखिए। Write the two forms of the following words in second case ending in singular number and plural number. ]

उदा०– 1. नर्त्तकी < नर्त्तकीम् / नर्त्तकीः

| | | |
|---|---|---|
| 1. नर्त्तकी < ..नर्त्तकीम्... / ..नर्त्तकीः... | 2. नदी < .......... / .......... | 3. मयूरी < .......... / .......... |
| 4. नारी < .......... / .......... | 5. देवी < .......... / .......... | 6. नटी < .......... / .......... |
| 7. भगिनी < .......... / .......... | 8. जननी < .......... / .......... | 9. पुत्री < .......... / .......... |
| 10. दर्वी < .......... / .......... | 11. भिक्षुकी < .......... / .......... | 12. रजकी < .......... / .......... |
| 13. लेखनी < .......... / .......... | 14. कर्त्तरी < .......... / .......... | 15. अनुरागिणी < .......... / .......... |

# अभ्यासः – 96

**ई० स्त्री० शब्दानां द्वितीया–एकवचन / बहु० रूपाणि**

✍ **उदाहरणानुगुणं रिक्तस्थानानि पूरयन्तु–**

[ उदाहरणों के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Fill in the blanks as shown in the exampls. ]

(I)

उदा०–

एषा

1. (भगिन्यः) भगिनीः
2. (प्रतिवेशिन्यः) ...............
3. (कर्मकर्यः) ...............
4. (पुत्र्यः) ...............
5. (महिष्यः) ...............
6. (गृहिण्यः) ...............
7. (नर्त्तक्यः) ...............
8. (नट्यः) ...............
9. (सख्यः) ...............
10. (तरुण्यः) ...............

आह्वयति

(II)

उदा०–

सा

1. (लेखन्यः) लेखनीः
2. (अङ्कन्यः) ...............
3. (चालन्यः) ...............
4. (वेल्लन्यः) ...............
5. (दर्व्यः) ...............
6. (आकाशवाण्यः) ...............
7. (दिनदर्शिन्यः) ...............
8. (घट्यः) ...............
9. (सूच्यः) ...............
10. (केशसूच्यः) ...............

क्रीणाति

## 2.1.6 अकारान्तनपुंसकलिङ्गशब्दानां त्रिषु वचनेषु द्वितीयाप्रयोगाः

**ध्यानेन पठन्तु–**
[ ध्यान से पढ़िए । Read carefully. ]



## अभ्यासः – 97

### 2.1.6 अकारान्तनपुंसकलिङ्गशब्दानां द्वितीयाप्रयोगाः

✍ **एकस्मिन् वाक्ये एकम् एव कर्मपदं प्रयुज्य प्रदत्तं वाक्यं पुनः लिखन्तु–**
[एक वाक्य में एक ही कर्मपद का प्रयोग करते हुए दिये गये वाक्य को पुनः लिखिए। Re-write the given sentences by using only one object in one sentence.]

I. **वयं वाक्यं व्याकरणं पत्रं पुस्तकं काव्यं च पठामः।**

यथा– 1. ...वयं... ...वाक्यं... ...पठामः... ।
2. ......... ............... ............. ।
3. ......... ............... ............. ।
4. ......... ............... ............. ।
5. ......... ............... ............. ।

II. **वयं वाक्ये व्याकरणे पत्रे पुस्तके काव्ये च पठामः।**

1. ...वयं... ...वाक्ये... ...पठामः... ।
2. ......... ............... ............. ।
3. ......... ............... ............. ।
4. ......... ............... ............. ।
5. ......... ............... ............. ।

III. **वयं वाक्यानि व्याकरणानि पत्राणि पुस्तकानि काव्यानि च पठामः।**

1. ......... ............... ............. ।
2. ......... ............... ............. ।
3. ......... ............... ............. ।
4. ......... ............... ............. ।
5. ......... ............... ............. ।

# अभ्यासः – 98

**अकारान्तनपुंसकशब्दानां द्वितीयारूपाणि**

**उदाहरणानुसारं रूपाणि लिखन्तु–**

[ उदाहरण के अनुसार रूपों को लिखिए। Write the forms (Rupas) as shown in the example. ]

उदा०– 1. वाक्यम् → ...वाक्यम्... ......वाक्ये... ......वाक्यानि।

2. पुस्तकम् → ......... ............... ............. ।

3. फलम् → ......... ............... ............. ।

4. पुष्पम् → ......... ............... ............. ।

5. विमानम् → ......... ............... ............. ।

6. व्यजनम् → ......... ............... ............. ।

7. नेत्रम् → ......... ............... ............. ।

8. वस्त्रम् → ......... ............... ............. ।

9. शरीरम् → ......... ............... ............. ।

10. विज्ञानम् → ......... ............... ............. ।

11. शास्त्रम् → ......... ............... ............. ।

12. द्वारम् → ......... ............... ............. ।

13. पत्रम् → ......... ............... ............. ।

14. भवनम् → ......... ............... ............. ।

15. सस्यम् → ......... ............... ............. ।

16. पर्णम् → ......... ............... ............. ।

## अभ्यासः – 99

**अ० नपुं० द्वितीया एक० / बहु० रूपाणि**

**अग्रे लिखितानां शब्दानां द्वितीयायाम् एकवचने बहुवचने च रूपाणि लिखन्तु–**

[ अधोलिखित शब्दों के द्वितीया विभक्ति के एकवचन और बहुवचन के रूप लिखिए। Write the forms of the following words in Singular Number and Plural Number of second case - ending. ]

उदा०–

1 विमानम् < ..विमानम्.. / .विमानानि.

2. पर्णम् < ........... / ...........

3. यन्त्रम् < ........... / ...........

4 पुष्पम् < ........... / ...........

5. फलम् < ........... / ...........

6. वस्त्रम् < ........... / ...........

7 नगरम् < ........... / ...........

8. यानम् < ........... / ...........

9. गृहम् < ........... / ...........

10 वनम् < ........... / ...........

11. फलकम् < ........... / ...........

12. पात्रम् < ........... / ...........

## अभ्यासः – 100

*अ० नपुं० शब्दानां द्वितीया–बहुवचनप्रयोगाः*

**उदाहरणानुगुणं वाक्यानि पूरयन्तु–**

[ उदाहरणों के अनुसार वाक्यों को पूरा कीजिए। Complete the sentences as shown in the examples. ]

(I)

उदा०–

अहं

1. (पुष्प) ......पुष्पाणि......
2. (पत्र) ..................
3. (वस्त्र) ..................
4. (यन्त्र) ..................
5. (चक्र) ..................
6. (चित्र) ..................
7. (रूप्यक) ..................

नयामि

(II)

उदा०–

सा

1. (फलक) ......फलकानि......
2. (युतक) ..................
3. (करांशुक) ..................
4. (पुस्तक) ..................
5. (काष्ठ) ..................
6. (साधन) ..................
7. (वातायन) ..................
8. (यान) ..................
9. (व्यजन) ..................
10. (मोदक) ..................
11. (फल) ..................

क्रीणाति

## अभ्यासः – 101

**द्वितीया–द्विवचनस्य मिश्रिताः प्रयोगाः**

**मञ्जूषायाः पदं योजयित्वा रिक्तस्थानानि पूरयन्तु–**

[ मञ्जूषा के पदों को जोड़कर रिक्त स्थानों को भरिए। Fill in the blanks by combining the words given in the box.]

| | | |
|---|---|---|
| 1. बालौ ..वृक्षौ.. | वृक्षः + वृक्षः | आरोहतः। |
| 2. त्वम् .अङ्कन्यौ.... | अङ्कनी + अङ्कनी | आनयसि। |
| 3. सः ....फले.... | फलम् + फलम् | खादति। |
| 4. वयं ........... | ग्रामः + ग्रामः | गच्छामः। |
| 5. यूयम् ......... | आरक्षकः + आरक्षकः | पृच्छथ। |
| 6. युवां ........... | लेखनी + लेखनी | आनयथः। |
| 7. आवां ......... | पुस्तकम् + पुस्तकम् | पठावः। |
| 8. भिक्षुकः ........ | बालिका + बालिका | पृच्छति। |
| 9. ते ........... | शकटः + शकटः | क्रीणन्ति। |
| 10. अहं ........... | नाणकम् + नाणकम् | ददामि। |
| 11. भवती ........ | आसन्दः + आसन्दः | आनयति। |
| 12. छात्रः .......... | पीठम् + पीठम् | स्थापयति। |
| 13. महिलाः ........ | पुष्पम् + पुष्पम् | धरन्ति। |
| 14. महाराजः ....... | नर्तकी + नर्तकी | आह्वयति। |
| 15. भवन्तः ......... | ऊरुकम् + ऊरुकम् | क्रीणन्ति। |

## अभ्यासः – 102

**त्रिषु लिङ्गेषु द्वितीयायां संज्ञाशब्दानां मिश्रिताः प्रयोगाः**

**उदाहरणानुसारं रूपाणि लिखित्वा वाक्यानि पूरयन्तु–**

[ उदाहरण के अनुसार रूपों का वाक्य में प्रयोग कीजिए। Complete sentences with the proper forms. ]

(कविता) (कथा) (ग्रन्थः) (पत्रम्) (श्लोकः)

1. सः कविताम् ......... ......... ......... ......... च पठति।

(श्लोकौ) (पुस्तके) (अध्यायौ) (निबन्धौ) (कविते) (सूचने)

2. आवां ......... ......... ......... ......... ......... ......... च लिखावः।

(मञ्चः) (भवनम्) (गजः) (अश्वाः) (वृक्षाः) (प्रासादाः) (पर्वताः)

3. सः ......... ......... ......... ......... ......... ......... ......... च आरोहति।

(मञ्चाः) (गजाः) (अश्वाः) (वृक्षाः) (प्रासादाः) (पर्वताः)

4. तौ ......... ......... ......... ......... ......... ......... च आरोहतः।

(प्रदर्शनी) (जन्तुशाला) (ग्रामः) (काशी) (प्रयागः) (मथुरा) (अयोध्या)

5. त्वं ......... ......... ......... ......... ......... ......... ......... च पश्यसि।

(गृहम्) (मन्दिराणि) (छात्रावासः) (भोजनालयाः) (ग्रामाः) (नगर्यः)

6. वयं ......... ......... ......... ......... ......... ......... च प्रविशामः।

(पाठाः) (कादम्बरी) (पत्रिकाः) (लेखाः) (वाक्यानि) (कथाः)

7. ते ......... ......... ......... ......... ......... ......... च पठन्ति।

## [ सर्वनामानि ]

### 2.1.7 सर्वनामशब्दानां द्वितीयाप्रयोगाः

**ध्यानेन पठन्तु–**

[ ध्यान से पढ़िए। Please read carefully. ]

| | (अहम्) | (त्वम्) | (सः) | (सा) | (एषः) | (एषा) | (भवान्) | (भवती) | |
|---|---|---|---|---|---|---|---|---|---|
| | ↓ | ↓ | ↓ | ↓ | ↓ | ↓ | ↓ | ↓ | |
| बालकः | मां | त्वां | तं | तां | एतम् | एतां | भवन्तं | भवतीं | पृच्छति । |
| | (आवाम्) | (युवाम्) | (तौ) | (ते बालिके) | (एतौ) | (एते छात्रे) | (भवन्तौ) | (भवत्यौ) | |
| | ↓ | ↓ | ↓ | ↓ | ↓ | ↓ | ↓ | ↓ | |
| बालकः | आवां | युवां | तौ | ते | एतौ | एते छात्रे | भवन्तौ | भवत्यौ | पृच्छति । |
| | (वयम्) | (यूयम्) | (ते) | (ताः) | (एते) | (एताः) | (भवन्तः) | (भवत्यः) | |
| | ↓ | ↓ | ↓ | ↓ | ↓ | ↓ | ↓ | ↓ | |
| बालकः | अस्मान् | युष्मान् | तान् | ताः | एतान् | एताः | भवतः | भवतीः | पृच्छति । |

**सम्यक् स्मरन्तु**

| | | | | |
|---|---|---|---|---|
| अहम् | – | माम् | आवाम् | अस्मान् |
| त्वम् | – | त्वाम् | युवाम् | युष्मान् |
| सः (पुं०) | – | तम् | तौ | तान् |
| सा (स्त्री०) | – | ताम् | ते | ताः |
| तत् (नपुं०) | – | तत् | ते | तानि |
| एषः (पुं०) | – | एतम् | एतौ | एतान् |
| एषा (स्त्री०) | – | एताम् | एते | एताः |
| एतत् (नपुं०) | – | एतत् | एते | एतानि |
| भवान् (पुं०) | – | भवन्तम् | भवन्तौ | भवतः |
| भवती (स्त्री०) | – | भवतीम् | भवत्यौ | भवतीः |
| कः (पुं०) | – | कम् | कौ | कान् |
| का (स्त्री०) | – | काम् | के | काः |
| किम् (नपुं०) | – | किम् | के | कानि |

एतानि सर्वाणि द्वितीयान्तरूपाणि सम्यक् स्मरणीयानि ।

## अभ्यासः – 103

**सर्वनामशब्दानां द्वितीयारूपाणि**

**प्रथमाविभक्तिवचनानुगुणं द्वितीयाविभक्तिरूपाणि लिखन्तु–**

[ प्रथमा विभक्ति के वचन के अनुसार द्वितीया विभक्ति के रूपों को लिखिए। Write the forms of second case ending according to the number of the first case-ending *Vibhakti.* ]

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| 1. | अहम् | ...माम्....। | 2. | त्वम् | ...........। | 3. | सा | ...........। |
| 4. | भवान् | ...........। | 5. | सः | ...........। | 6. | एषः | ...........। |
| 7. | भवत्यः | ...........। | 8. | वयम् | ...........। | 9. | आवाम् | ...........। |
| 10. | भवन्तौ | ...........। | 11. | काः | ...........। | 12. | भवत्यौ | ...........। |
| 13. | का | ...........। | 14. | एषा | ..... .....। | 15. | एताः | ...........। |

## अभ्यासः – 104

**सर्वनामशब्दानां द्वितीयाप्रयोगाः**

**कोष्ठे लिखितानां शब्दानां द्वितीयान्तरूपाणि लिखन्तु–**

[ कोष्ठ में लिखे गए शब्दों के द्वितीया विभक्ति के रूप लिखिए। Add second case ending to the words given in brackets and fill in the blanks. ]

1. सः (अहम्) ..माम्.... आह्वयति।
2. सा (भवती) .......... पश्यति।
3. जननी (सा) .......... स्पृशति।
4. त्वं (ते [ पुं० ]) .......... मा विस्मर।
5. धर्मः (भवान्) .......... रक्षति।
6. सा (भवत्यः) .......... स्मरति।
7. सर्वे (यूयम्) .......... पृच्छन्ति।
8. भवान् (एषा) .......... जानाति किम्?
9. सः (त्वम्) .......... न जानाति।
10. के (वयम्) .......... पृच्छन्ति?

| | | | | |
|---|---|---|---|---|
| भवन्तम्, | त्वाम्, | युष्मान्, | अस्मान्, | भवतीम्, |
| तान्, | भवतीः, | एताम्, | ताम्, | माम् |

# द्वितीयः स्तबकः

## 2.2 द्वितीयः पाठः

[ वर्तमानकाले विशेषक्रियापदानि ]

### 2.2.1 जानाति

**अग्रे निर्दिष्टायां मञ्जूषायां दत्तानां क्रियापदानाम् आधारेण रिक्तस्थानानि पूरयन्तु–**

[ अधोनिर्दिष्ट मञ्जूषा में प्रदत्त क्रियाओं के आधार पर रिक्त स्थानों की पूर्ति कीजिए। Fill in the blanks by choosing the right verb from the table given below. ]

उदा०– 1. वयं ..जानीमः.. ।
2. ते बालकाः न .......... ।
3. किं यूयं .......... ?
4. भवती किं किं .......... ?
5. भवत्यः .......... वा ?
6. आवां न .......... ।
7. एते बालिके .......... ।
8. एते बालकाः .......... ।
9. बालिकाः .......... ।
10. बालकौ .......... ।
11. रमा .......... ।
12. मोहनः .......... ।
13. युवां .......... ।
14. भवान् .......... ।
15. वयं किञ्चित् अपि न .......... ।
16. एते बालकाः सर्वं .......... ।
17. ताः बालिकाः अपि सर्वं .......... ।
18. भवत्यौ किं ..........?
19. एषा मां .......... ।
20. त्वं तान् .......... ।
21. त्वम् अस्मान् न .......... ।
22. वयं युष्मान् .......... ।
23. भवत्यौ .......... ।
24. एताः तान् .......... ।
25. वयं त्वां .......... ।
26. सा मां सम्यक् .......... ।
27. किं भवन्तः अस्मान् .......... ।
28. तौ तां .......... ।

**अधोलिखितानि रूपाणि सम्यक् स्मरणीयानि–**

[ अधोलिखित रूपों का अच्छी तरह स्मरण कीजिए। Learn the following forms Properly.]

**( ज्ञा–धातोः रूपाणि )**

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः पुरुषः | जानाति | जानीतः | जानन्ति |
| मध्यमः पुरुषः | जानासि | जानीथः | जानीथ |
| उत्तमः पुरुषः | जानामि | जानीवः | जानीमः |

## 2.2.2 करोति

**उदाहरणानुसारम् उचितक्रियापदैः रिक्तस्थानानि पूरयन्तु–**

[ उदाहरण के अनुसार उचित क्रिया पदों से रिक्त स्थानों की पूर्ति कीजिए। Fill in the blanks with appropriate verbs as shown in the example. ]

उदा०– 1. सा ध्यानं ...करोति..।

2. ते अध्यापनं न ..........।

3. त्वं शयनं ............।

4. भवन्तः मननं ..........।

5. युवां पाकं ..........।

6. भवन्तौ पालनं ..........।

7. किं यूयं स्वच्छतां .......... ?

8. आवां मार्जनं ..........।

9. तौ भोजनं ..........।

10. त्वं रोदनं ..........।

11. भवती प्रक्षालनं ..........।

12. एतौ भजनं ..........।

13. किं भवत्यौ कार्यं .......... ?

14. ताः किं .......... ?

15. आवां किं .......... ?

16. वयं न ..........।

17. भवत्यः बोधनं ..........।

18. ते (छात्रे) किमपि ..........।

19. सा किं किं .......... ?

20. किं यूयं स्वकार्यं .......... ?

21. ताः चिन्तनं ..........।

22. भवन्तौ शयनं ..........।

23. एतौ अध्ययनं ..........।

24. वैद्याः चिकित्सां ..........।

25. मूर्खौ निन्दनं ..........।

26. बालः रोदनं ..........।

## (कृ–धातोः रूपाणि)

**अधोलिखितानि रूपाणि सम्यक् स्मरन्तु–**

[ अधोलिखित रूपों का अच्छी तरह स्मरण कीजिए। Learn the following forms properly. ]

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | करोति | कुरुतः | कुर्वन्ति |
| म० पु० | करोषि | कुरुथः | कुरुथ |
| उ० पु० | करोमि | कुर्वः | कुर्मः |

### 2.2.3 क्रीणाति

**प्रथममञ्जूषातः कर्तृपदं, द्वितीयमञ्जूषातः कर्मपदं चित्वा क्री–धातोः उचितेन क्रियापदेन संयोज्य अग्रे लिखन्तु –**

[ प्रथम पेटिका से कर्तृपद तथा द्वितीय पेटिका से कर्मपद का चयन कर 'क्री' धातु के उचित क्रिया–पद के साथ मिलाकर अग्रलिखित उदाहरण वाक्यों के अनुसार अन्य वाक्य बनाइए। Select the Subject from the first box, object from the second box and form sentences by adding the proper form of root *Kri.* ]

| 1 | 2 | 3 | 4 | 5 | 6 | 7 | 8 | 9 | 10 |
|---|---|---|---|---|---|---|---|---|---|
| गृहिणी | ताः | भवत्यौ | एताः | भगिनी | सः | भवान् | एषः | युवाम् | यूयम् |
| 11 | 12 | 13 | 14 | 15 | 16 | 17 | 18 | 19 | 20 |
| तौ | ते | भवन्तौ | एतौ | वयम् | भवन्तः | भवती | सा | त्वम् | अहम् |
| 21 | 22 | 23 | 24 | 25 | 26 | | | | |
| एते | वैद्याः | रुग्णाः | आवाम् | पण्डिताः | भवन्तः | | | | |

| 1 | 2 | 3 | 4 | 5 | 6 | 7 | 8 | 9 | 10 |
|---|---|---|---|---|---|---|---|---|---|
| पुष्पाणि | वस्त्रम् | पात्राणि | लेखनीः | वेल्लनीं | पुस्तकम् | ग्रन्थान् | कादम्बरीं | यानानि | दर्वीं |
| 11 | 12 | 13 | 14 | 15 | 16 | 17 | 18 | 19 | 20 |
| गृहे | फलम् | शाटिके | औषधम् | मञ्जूषाम् | कण्ठहारम् | आसन्दम् | कपाटिकाम् | मालाम् | दूरदर्शनम् |
| 21 | 22 | 23 | 24 | 25 | 26 | | | | |
| शीतकम् | जवनिकाम् | सूचीम् | घटीम् | स्यूतम् | करांशुकम् | | | | |

## ( क्री–धातोः रूपाणि )

**अधोलिखितानि रूपाणि सम्यक् स्मरन्तु–**

[ निम्नलिखित रूपों का अच्छी तरह स्मरण कीजिए। Learn the following forms properly.]

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्र० पु० | क्रीणाति | क्रीणीतः | क्रीणन्ति |
| म० पु० | क्रीणासि | क्रीणीथः | क्रीणीथ |
| उ० पु० | क्रीणामि | क्रीणीवः | क्रीणीमः |

## 2.2.4 शक्नोति

**उदाहरणानुसारं रिक्तस्थानानि पूरयन्तु–**

[ उदाहरणों के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Fill in the blanks as shown in the example. ]

उदा०– 1. रामः कार्यं कर्त्तुं ..शक्नोति.. ।
2. त्वं कार्यं कर्त्तुं ............ ।
3. अहं कार्यं कर्त्तुं ............ ।
4. युवां कार्यं कर्त्तुं ............ ।
5. आवां कार्यं कर्त्तुं ............ ।
6. वैद्याः कार्यं कर्त्तुं ............ ।
7. पण्डिताः कार्यं कर्त्तुं ............ ।
8. यूयं कार्यं कर्त्तुं ............ ।
9. एषः कार्यं कर्त्तुं ............ ।
10. वयं कार्यं कर्त्तुं ............ ।
11. भवती कार्यं कर्त्तुं ............ ।
12. भवान् कार्यं कर्त्तुं ............ ।
13. भवन्तौ कार्यं कर्त्तुं ............ ।
14. भवन्तः कार्यं कर्त्तुं ............ ।
15. भवत्यः कार्यं कर्त्तुं ............ ।
16. तौ कार्यं कर्त्तुं ............ ।
17. भवत्यौ कार्यं कर्त्तुं ............ ।
18. सः कार्यं कर्त्तुं ............ ।
19. ताः कार्यं कर्त्तुं ............ ।
20. सा कार्यं कर्त्तुं ............ ।
21. ते बालिके कार्यं कर्त्तुं ............ ।
22. छात्राः कार्यं कर्त्तुं ............ ।
23. शिष्यौ कार्यं कर्त्तुं ............ ।
24. अध्यापकौ कार्यं कर्त्तुं ............ ।
25. यूयं बालकाः कार्यं कर्त्तुं ............ ।

## (शक्–धातोः रूपाणि)

**अग्रे लिखितानि रूपाणि स्मरन्तु–**

[ अधोलिखित रूपों का स्मरण कीजिए। Learn the following forms. ]

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः पुरुषः | शक्नोति | शक्नुतः | शक्नुवन्ति |
| मध्यमः पुरुषः | शक्नोषि | शक्नुथः | शक्नुथ |
| उत्तमः पुरुषः | शक्नोमि | शक्नुवः | शक्नुमः |

### 2.2.5 शृणोति

**उदाहरणानुसारं रिक्तस्थानानि पूरयन्तु—**

[ उदाहरण के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Fill in the blanks as shown in the example. ]

उदा०— 1. बालकः वार्तां ..शृणोति..... ।

2. जनकः विषयान् ............ ।

3. शिष्यः नियमौ ............ ।

4. यूयं श्लोकान् ............ ।

5. अहं गीतां ............ ।

6. त्वं प्रवचनं ............ ।

7. आवां भाषणं ............ ।

8. एतौ निन्दनं ............ ।

9. तौ आकाशवाणीं ............ ।

10. ते सङ्गीतं ............ ।

11. भवन्तः रामायणं ............ ।

12. आरक्षकौ ध्वनिं ............ ।

13. जननी रोदनं ............ ।

14. आवां भजनं ............ ।

15. तौ कोलाहलं ............ ।

16. वयं पाठान् ............ ।

## ( श्रु—धातोः रूपाणि )

**अग्रे लिखितानि रूपाणि सम्यक् स्मरन्तु—**

[ निम्नलिखित रूपों को अच्छी तरह याद करें। Learn the following forms properly.]

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः पुरुषः | शृणोति | शृणुतः | शृण्वन्ति |
| मध्यमः पुरुषः | शृणोषि | शृणुथः | शृणुथ |
| उत्तमः पुरुषः | शृणोमि | शृण्वः | शृण्मः |

### 2.2.6 गृह्णाति

✍ **अग्रे दर्शितायाः मञ्जूषायाः उचितं क्रियापदं चित्वा रिक्तस्थानानि पूरयन्तु–**
[ अधोदर्शित मञ्जूषा से उचित क्रिया का चयन कर रिक्त स्थानों की पूर्ति कीजिए। Fill in the blanks by selecting proper form of the verb given below in the box . ]

उदा०– 1. बालकः कन्दुकं गृह्णाति।
2. जनन्यः शिशुं ............।
3. यूयं चोरं ............।
4. आवां ............।
5. तौ ............।
6. आरक्षकौ चोरौ ............।
7. युवां कन्दुकं ............।
8. अहं शिशुं ............।
9. भवन्तौ किं .......... ?
10. भवती किं .......... ?
11 ते किं किं .......... ?
12. त्वं मां ............।
13. यूयं तौ ............।
14. भवत्यौ तान् ............।
15. सा किं ............ ?
16. भवत्यः अस्मान् ............।
17. छात्रः लेखनीं ............।
18. युवाम् आसन्दं ............।
19. त्वं तं ............।
20. ते स्यूतं ............।
21. किं ते चोरं ............ ?
22. ताः मार्जारं ............।
23. अहं शुकं ............।
24. त्वं शुकं न ............।
25. किं तौ सर्वान् ............ ?
26. वयं प्रसादं ............।

## ( ग्रह्–धातोः रूपाणि )

📖 **अग्रे लिखितानि रूपाणि सम्यक् स्मरन्तु–**

[ निम्नलिखित रूपों को अच्छी तरह याद करें। Learn the following forms well.]

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः पुरुषः | गृह्णाति | गृह्णीतः | गृह्णन्ति |
| मध्यमः पुरुषः | गृह्णासि | गृह्णीथः | गृह्णीथ |
| उत्तमः पुरुषः | गृह्णामि | गृह्णीवः | गृह्णीमः |

### 2.2.7 ददाति

**अग्रे दर्शितायाः मञ्जूषायाः उचितं क्रियापदं चित्वा रिक्तस्थानानि पूरयन्तु–**

[ अधोदर्शित पेटिका से उचित क्रिया का चयन कर रिक्त स्थानों की पूर्ति कीजिए। Fill in the blanks by selecting proper forms of the verbs given below in the box. ]

उदा०– 1. सा फलं ...ददाति...।

2. ते (पुं०) सुधाखण्डं ..........।

3. भवन्तः भोजनं ..........।

4. बालकः लेखनीं ..........।

5. अहं पुष्पं ..........।

6. वयं रोटिकां ..........।

7. अहं स्यूतं ..........।

8. तौ नाणकं ..........।

9. आवां शाटिकां ..........।

10. गृहिण्यः भिक्षां ..........।

11. वयं धनं ..........।

12. त्वं पत्रं ..........।

13. देवः वरं ..........।

14. वयं वस्त्राणि ..........।

15. महिला आभरणं ...ददाति..।

16. वयं लेखनीं ..........।

17. ताः पुस्तकानि ..........।

18. किं, त्वं पुष्पं .......... ?

19. न, अहं फलं ..........।

20. सा किं किं .......... ?

21. सा किमपि न ..........।

22. अस्तु, अहं ..........।

23. भवती कङ्कणं ..........।

24. ताः कण्ठहारं ..........।

25. किं सा सुवर्णं .......... ?

26. न, सा पात्रं ..........।

27. भवत्यः किं .......... ?

28. वयं आसन्दं ..........।

## ( दा–धातोः रूपाणि )

**अधोलिखितानि रूपाणि सम्यक् स्मरन्तु–**

[ अधोलिखित रूपों का अच्छी तरह स्मरण कीजिए। Learn the following forms properly.]

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | ददाति | दत्तः | ददति |
| म० पु० | ददासि | दत्थः | दत्थ |
| उ० पु० | ददामि | दद्वः | दद्मः |

## 2.2.8 पाठयति-इत्यादीनि कानिचित् ण्यन्तक्रियापदानि

**ध्यानेन पठन्तु-**

[ ध्यान से पढ़िए। Please read carefully.]



छात्रः पुस्तकं पठति।



जननी पुस्तकं पाठयति।



बालकः भोजनं करोति।



जननी भोजनं कारयति।



अश्वौ रथं वहतः।



रथिकः रथं वाहयति।



बालकः निद्राति।



जननी बालकं निद्रापयति।

**यथोदाहरणं रिक्तस्थानानि पूरयन्तु–**

[ उदाहरण के अनुसार रिक्तस्थानों की पूर्ति कीजिए। Fill in the blanks as shown in the example. ]



छात्रः पुस्तकं पठति।



अध्यापकः पुस्तकं पाठयति।

उदा०–

1. आचार्यः वेदं ..पाठयति.. । ( पाठय् )
2. त्वं कवितां .......... । ( पाठय् )
3. सा गीतं .......... । ( पाठय् )
4. पितामहः हितवचनं .......... । ( पाठय् )
5. जनकः रामायणं बोधयति । ( बोधय् )
6. जननी पुत्रं .......... । ( बोधय् )
7. वयं संस्कृतिं बोधयामः । ( बोधय् )
8. यूयं शिष्टाचारं बोधयथ । ( बोधय् )
9. भगिनी चित्रं ..दर्शयति.. । ( दर्शय् )
10. युवकः सर्पं .......... । ( दर्शय् )
11. वयम् अभिमानं .......... । ( दर्शय् )
12. जननी पुत्रम् उत्थापयति । ( उत्थापय् )
13. अधिकारी सेवकम् .......... । ( उत्थापय् )
14. स्वामी कार्यं ..कारयति.. । ( कारय् )
15. अग्रजा भोजनं .......... । ( कारय् )
16. प्रवाचकः प्रवचनं ..श्रावयति.. । ( श्रावय् )
17. रमा गीतं .......... । ( श्रावय् )
18. अहं कवितां ..श्रावयामि.. । ( श्रावय् )
19. पण्डितः वेदं............ । ( श्रावय् )
20. छात्रः श्लोकं............ । ( श्रावय् )

# अभ्यासः – 105

**विशेषक्रियापदानां मिश्रिताः प्रयोगाः**

**उदाहरणानुगुणम् उचितैः क्रियापदरूपैः रिक्तस्थानानि पूरयन्तु–**

[ उदाहरण के अनुसार उचित क्रिया–पद के रूपों से रिक्त स्थानों की पूर्ति कीजिए। Fill in the blanks by the suitable forms of the verbs as shown in the example. ]

| | | | | |
|---|---|---|---|---|
| उदा0– 1. सा संस्कृतं न जानाति। | ( ज्ञा ) | 12. | ते कोलाहलं ..........। | ( श्रु ) |
| 2. वयं संस्कृतं..........। | ( ज्ञा ) | 13. | वयं गीतं ..........। | ( श्रु ) |
| 3. आरक्षकः चोरं ..........। | ( ग्रह् ) | 14. | तौ रामायणं ..........। | ( श्रु ) |
| 4. महिला शाटिकां ..........। | ( क्री ) | 15. | साधकः ध्यानं ..........। | ( कृ ) |
| 5. ते शिष्टाचारं न .........। | ( ज्ञा ) | 16. | पुरुषाः भोजनं ..........। | ( कृ ) |
| 6. गृहिणी रोटिकां ..........। | ( दा ) | 17. | वयं सत्कार्यं ..........। | ( कृ ) |
| 7. अनुजः चित्रं ..........। | ( दर्शय् ) | 18. | ताः समाजसेवां ..........। | ( कृ ) |
| 8. वैद्याः औषधं ..........। | ( दा ) | 19. | सः ..........। | ( शक् ) |
| 9. भवन्तः पुस्तकानि ........। | ( क्री ) | 20. | वयं ..........। | ( शक् ) |
| 10. वयं दुर्जनं न ..........। | ( ज्ञा ) | 21. | बालाः कन्दुकं ..........। | ( ग्रह् ) |
| 11. आवां फलानि ..........। | ( क्री ) | 22. | वयं पुष्पाणि ..........। | ( दा ) |

# द्वितीयः स्तबकः

## 2.3 तृतीयः पाठः

[ आज्ञा–प्रार्थनादिषु अर्थेषु लोट् ]

### 2.3.1 लोट्मध्यमपुरुषे प्रयोगाः

**ध्यानेन पठन्तु–**

[ ध्यान से पढ़िए। Please read carefully. ]



चल



तिष्ठ



आगच्छ



उपविश



पठ



लिख



खाद



मा वद



पिब



चल

---

वर्तमाने



यच्छति । (ददाति)

प्रार्थनादिषु



यच्छ । (देहि)

उदा०- (1) सः पठति । [प] [ठ] → [ति] त्वं [पठ] ।

(2) सः लिखति [लि] [ख] → [ति] त्वं [लिख] ।

## अभ्यासः – 106

**वर्त्तमानकाले लटि प्रथम पुरुष-एकवचनस्य आज्ञाप्रार्थनादिषु (लोटि) मध्यमपुरुष-एकवचने परिवर्तनम्**

उदाहरणानुगुणं रूपाणि लिखन्तु–

[ उदाहरणों के अनुसार रूप लिखिए। Write the forms as shown in the examples. ]

| | सः ↓ (वर्त्तमाने) | त्वं ↓ (आज्ञादिषु) |
|---|---|---|
| उदा०– | 1. खादति | ....खाद.... |
| | 2. वदति | ....वद.... |
| | 3. हसति | ............ |
| | 4. नमति | ............ |
| | 5. क्रीडति | ............ |
| | 6. चलति | ............ |
| | 7. प्रहरति | ............ |
| | 8. मिलति | ............ |
| | 9. पिबति | ............ |
| | 10. नयति | ............ |
| | 11. पश्यति | ............ |
| | 12. स्थापयति | ............ |
| | 13. उत्तिष्ठति | ............ |
| | 14. उपविशति | ............ |
| | 15. स्मरति | ............ |
| | 16. प्रेषयति | ............ |
| | 17. नृत्यति | ............ |
| | 18. गायति | ............ |
| | 19. त्यजति | ............ |
| | 20. चिन्तयति | ............ |
| | 21. तरति | ............ |
| | 22. पतति | ............ |
| | 23. प्रविशति | ............ |
| | 24. पठति | ............ |
| | 25. गच्छति | ............ |

### करोति ⟶ कुरु

| | | |
|---|---|---|
| 26. | सः/सा सेवां करोति। | त्वं सेवां कुरु। |
| 27. | सः/सा कार्यं करोति। | त्वं कार्यं .......। |
| 28. | सः/सा अध्ययनं करोति। | त्वम् अध्ययनं ......। |
| 29. | सः/सा भजनं करोति। | त्वं भजनं ........। |
| 30. | सः/सा नृत्यं करोति। | त्वं नृत्यं ..........। |

## अभ्यासः – 107

**वर्त्तमानकाले लटि प्रथमपुरुष-एकवचनस्य आज्ञाप्रार्थनादिषु (लोटि) मध्यमपुरुष -एकवचने परिवर्तनम्**

उदाहरणानुगुणं वाक्यानि रचयन्तु–

[ उदाहरण के अनुसार वाक्य लिखिए। Write the sentences as per the example. ]

उदा०– 1. सः खादति। त्वं ..खाद.... । 16. सेवकः आनयति। त्वम् ......... ।

2. बालकः वदति। त्वं .......... । 17. धनिकः यच्छति। त्वं .......... ।

3. एषा धावति। त्वं .......... । 18. भगिनी पिबति। त्वं .......... ।

4. भवान् गायति। त्वं .......... । 19. सः त्यजति। त्वं .......... ।

5. एषः पश्यति। त्वं .......... । 20. पितामहः चिन्तयति। त्वं .......... ।

6. गीता आगच्छति। त्वम् ......... । 21. शिष्यः कथयति। त्वं .......... ।

7. प्रकाशः हसति। त्वं .......... । 22. लता नयति। त्वं .......... ।

8. शिक्षकः पाठयति। त्वं .......... । 23. रमेशः आनयति। त्वम् ........ ।

9. सा रटति। त्वं .......... । 24. राधिका नृत्यति। त्वं .......... ।

10. बालकः क्रीडति। त्वं .......... । 25. सः तरति। त्वं .......... ।

11. जननी नमति। त्वं .......... । 26. लेखकः रचयति। त्वं .......... ।

12. रक्षकः रक्षति। त्वं .......... । 27. छात्रः पठति। त्वं .......... ।

13. भक्तः ध्यायति। त्वं .......... । 28. देवः रक्षति। त्वं .......... ।

14. छात्रः लिखति। त्वं .......... । 29. सः ताडयति। त्वं .......... ।

15. पिता आह्वयति। त्वम् ........ । 30. उदयनः प्रक्षालयति। त्वं .......... ।

## 2.3.1 (क) लोट्प्रथमपुरुषे प्रयोगाः

**ध्यानेन पठन्तु–**

[ ध्यान से पढ़िए। Please read carefully. ]



आगच्छतु



उपविशतु



पिबतु



खादतु



गृह्णातु



पश्यतु



भवान् उपविशतु

| वर्त्तमाने | आज्ञा/प्रार्थनादिषु | वर्त्तमाने | आज्ञा–प्रार्थनादिषु |
|---|---|---|---|
| उदा0– | | | |
| 1. सः उपविशति | भवान् ........... । | 11. नर्तकः नृत्यति | नटः ................ । |
| 2. सा पठति | सः ............. । | 12. पिता रक्षति | पुत्रः ................ । |
| 3. रामः गच्छति | भास्करः .......... । | 13. माता क्षालयति | भगिनी .............. । |
| 4. भक्तः नमति | बालकः .......... । | 14. सा यच्छति | सः ................. । |
| 5. चित्रकारः लिखति | छात्रः ........... । | 15. अध्यक्षः उपविशति | अतिथिः ............. । |
| 6. कोकिलः गायति | गायकः .......... । | 16. सौचिकः सीव्यति | अम्बा .............. । |
| 7. रमेशः क्रीडति | बालकृष्णः ........ । | 17. सा प्रेषयति | भवती ............... । |
| 8. लता वदति | सीता ........... । | 18. पुत्री सम्पादयति | पुत्रः ................ । |
| 9. सा चिन्तयति | एषा ............ । | 19. गिरीशः धरति | निखिलः ............... । |
| 10. चोरः धावति | आरक्षकः ......... । | 20. सिंहः गर्जति | व्याघ्रः ................ । |

### 2.3.1 (ख) त्रिषु वचनेषु त्रिषु पुरुषेषु लोट्

**ध्यानेन पठन्तु। उदाहरणानुगुणं रूपाणि लिखन्तु।**

[ ध्यान से पढिए। उदाहरण के अनुसार रूप लिखिए। Read carefully and write the forms as per the example.]

पठ्–वर्तमाने

| पठ ति | पठ तः | पठ न्ति |
|---|---|---|

आज्ञादिषु

| | | | | | |
|---|---|---|---|---|---|
| सः | पठ तु | तौ | पठ ताम् | ते | पठ न्तु |
| | वद तु | | वद ताम् | | वद न्तु |
| | लिख .... | | लिख .... | | लिख .... |
| | पश्य .... | | पश्य .... | | पश्य .... |
| | गच्छ .... | | गच्छ .... | | गच्छ .... |
| | हस .... | | हस .... | | हस .... |

वर्तमाने

| पठ सि | पठ थः | पठ थ |
|---|---|---|

आज्ञादिषु

| | | | | | |
|---|---|---|---|---|---|
| त्वं | पठ | युवां | पठ तम् | यूयं | पठ त |
| | लिख | | लिख .... | | लिख .... |
| | पश्य | | पश्य .... | | पश्य .... |
| | गच्छ | | गच्छ .... | | गच्छ .... |
| | हस | | हस .... | | हस .... |
| | वद | | वद .... | | वद .... |

वर्तमाने

| पठा मि | पठा वः | पठा मः |
|---|---|---|

आज्ञादिषु

| | | | | | |
|---|---|---|---|---|---|
| अहं | पठा नि | आवां | पठा व | वयं | पठा म |
| | लिखा .... | | लिखा .... | | लिखा .... |
| | वदा .... | | वदा .... | | वदा .... |
| | पश्या .... | | पश्या .... | | पश्या .... |
| | हसा .... | | हसा .... | | हसा .... |

## अभ्यासः – 108

**आज्ञा–प्रार्थनादिषु क्रियाप्रयोगाः (लोट्–लकारे प्रथमपुरुषे)**

**अधोलिखितवाक्यानि उचितक्रियापदैः पूरयन्तु।**

[ निम्नलिखित वाक्यों को उचित क्रियापद से पूरा कीजिए। Complete the following sentences with appropriate verbs. ]

उदा०–

1. सः गच्छति। एषः .....गच्छतु..... ।
2. सीता पठति। लता ............... ।
3. बालकः क्रीडति। बालिका ........... ।
4. बालिका गायति। महिला ............ ।
5. सा पश्यति। एषा ............... ।

उदा०–

6. तौ गच्छतः। एतौ ...गच्छताम्..... ।
7. नटौ नृत्यतः। नर्तकौ ............. ।
8. बालकौ तरतः। युवकौ ............. ।
9. वैद्यौ यच्छतः। अर्चकौ ............ ।
10. शुकौ वदतः। बालकौ ............ ।
11. सेवकौ तिष्ठतः। कर्मकरौ ........... ।
12. वृद्धौ उपविशतः। बालिके ............ ।
13. भक्तौ ध्यायतः। छात्रौ .............. ।
14. युवकौ हसतः। युवत्यौ ............. ।
15. सङ्गीतज्ञौ गायतः। गायकौ ............ ।

उदा०–

16. ते स्मरन्ति। एते .....स्मरन्तु.... ।
17. जनाः पश्यन्ति। सज्जनाः ........... ।
18. पुत्राः कुर्वन्ति। पुत्र्यः .............. ।
19. महिलाः आगच्छन्ति। पुरुषाः ............. ।
20. जनाः अर्चन्ति। भक्ताः ............ ।
21. व्याघ्राः धावन्ति। हरिणाः ............ ।
22. शिष्याः नमन्ति। बालिकाः ........... ।
23. मीनाः तरन्ति। मकराः ............ ।
24. देशभक्ताः जानन्ति। प्रजाः ............. ।
25. जनकाः रक्षन्ति। आरक्षकाः ......... ।

## अभ्यासः – 109

**आज्ञा–प्रार्थनादिषु क्रियाप्रयोगाः (लोट् लकारे मध्यम–पुरूषे)**

**अधोलिखितवाक्यानि उचितक्रियापदैः पूरयन्तु।**
[ निम्नलिखित वाक्यों को उचित क्रियापद से पूरा कीजिए। Complete the following sentences with appropriate verbs. ]

उदा०–

1. त्वं सम्पादयसि। त्वं ....सम्पादय.... ।
2. त्वं त्यजसि। त्वं ................ ।
3. त्वं प्रेषयसि। त्वं ................ ।
4. त्वं धरसि। त्वं ................ ।
5. त्वं चलसि। त्वं ................ ।
6. त्वं पश्यसि। त्वं ................ ।
7. त्वं नयसि। त्वं ................ ।
8. त्वम् उपविशसि। त्वम् ................ ।
9. त्वं पाठयसि। त्वं ................ ।
10. त्वं स्मरसि। त्वं ................ ।

उदा०–

11. युवां वदथः। युवां ....वदतम्.... ।
12. युवां क्रीडथः। युवां ................ ।
13. युवां नमथः। युवां ................ ।
14. युवां गणयथः। युवां ................ ।
15. युवां चालयथः। युवां ................ ।
16. युवां वादयथः। युवां ................ ।
17. युवां चर्चयथः। युवां ................ ।
18. युवां लिखथः। युवां ................ ।
19. युवां सञ्चरथः। युवां ................ ।
20. युवाम् आनयथः। युवाम् ................ ।

उदा०–

21. यूयं ध्यायथ। यूयं ....ध्यायत.... ।
22. यूयं नमथ। यूयं ................ ।
23. यूयं पिबथ। यूयं ................ ।
24. यूयं त्यजथ। यूयं ................ ।
25. यूयं मिलथ। यूयं ................ ।
26. यूयं जल्पथ। यूयं ................ ।
27. यूयं गुणयत। यूयं ................ ।
28. यूयं हसथ। यूयं ................ ।
29. यूयं स्मरथ। यूयं ................ ।
30. यूयं निन्दथ। यूयं ................ ।

## अभ्यासः – 110

**2.3.1.3 आज्ञा–प्रार्थनादिषु क्रियाप्रयोगाः (लोट्लकारे उत्तम-पुरुषे)**

✍ **अग्रे लिखितानि वाक्यानि उचितक्रियापदैः पूरयन्तु।**

[ निम्नलिखित वाक्यों को उचित क्रियापद से पूरा कीजिए। Complete the following sentences with appropriate verbs. ]

उदा० –

1. अहं गच्छामि। अहं ....गच्छानि.....।
2. अहं परिशीलयामि। अहं ................।
3. अहं हरामि। अहं ................।
4. अहं त्यजामि। अहं ................।
5. अहं वदामि। अहं ................।
6. अहं प्रदर्शयामि। अहं ................।
7. अहं तोषयामि। अहं ................।
8. अहं कर्तयामि। अहं ................।
9. अहम् उद्धरामि। अहम् ..............।
10. अहं निर्वापयामि। अहं ................।

उदा० –

11. आवां चलावः। आवां ....चलाव....।
12. आवां ज्वालयावः। आवां ..............।
13. आवाम् आरोपयावः। आवाम् ............।
14. आवां नृत्यावः। आवां ..............।
15. आवां प्रेषयावः। आवां ..............।
16. आवां निवारयावः। आवां ..............।
17. आवां चिन्तयावः। आवां ..............।
18. आवां त्यजावः। आवां ..............।
19. आवाम् उपविशावः। आवाम्..............।
20. आवां गायावः। आवां ..............।

उदा० –

21. वयं तरामः। वयं .....तराम.....।
22. वयं स्मरामः। वयं ...............।
23. वयं प्रेषयामः। वयं ...............।
24. वयं लिखामः। वयं ...............।
25. वयं धरामः। वयं ...............।
26. वयं क्रीडामः। वयं ...............।
27. वयं पश्यामः। वयं ...............।
28. वयं नयामः। वयं ...............।
29. वयम् आगच्छामः। वयम् ..............।
30. वयं प्रविशामः। वयं ...............।

## अभ्यासः – 111

**आज्ञादिषु क्रियाप्रयोगाः (लोट्लकारे त्रिषु पुरुषेषु)**

**कोष्ठके दत्तैः धातुभिः आज्ञार्थे क्रियापदानि निर्माय वाक्यानि पूरयन्तु।**

[ कोष्ठक में दी गई धातुओं से आज्ञार्थक क्रिया पद बना कर वाक्यों को पूरा कीजिए। Complete the following sentences by the imperative forms of the roots given in the brackets. ]

उदा०–

1. सः ..पठतु... । (पठ्)
2. सा ......... । (लिख्)
3. तौ ......... । (चर्च्)
4. त्वं ......... । (मिल्)
5. आवां ......... । (वद्)
6. यूयं ......... । (गाय्)
7. ते ......... । (सूच्)
8. युवां ......... । (सिञ्च्)
9. गायकौ ......... । (गाय्)
10. बालिके ......... । (गणय्)
11. छात्राः ......... । (स्मर्)
12. वैद्यः ......... । (यच्छ्)
13. गायकाः ......... । (गाय्)
14. देवः ......... । (पालय्)
15. वयं ......... । (त्यज्)
16. भवान् ......... । (नम्)
17. भवती ......... । (ज्ञा – जा)
18. वाहनानि ......... । (गच्छ्)
19. माता ......... । (पच्)
20. एषा ......... । (हस्)
21. एताः ......... । (क्रीण्)
22. भवत्यः ......... । (नृत्)
23. अर्चकः ......... । (अर्च्)
24. अहं ......... । (दण्डय्)
25. युवां ......... । (पिब्)
26. ते बालिके ......... । (क्रीड्)

## अभ्यासः – 112

*आज्ञादिषु क्रियाप्रयोगाः (लोट्–लकारे त्रिषु पुरुषेषु)*

· **कोष्ठे लिखितस्य क्रियापदस्य उचितं रूपं रिक्ते स्थाने योजयन्तु।**

[ कोष्ठ में लिखे क्रियापदों से उचित रूप चुनकर रिक्तस्थान में लिखिए। Fill in the blanks by choosing suitable form of verbs given in the brackets. ]

1. ते छात्रे .........। (गच्छतु / गच्छानि / गच्छताम् / गच्छाव)
2. भवती .........। (पठ / पठाम / पठतु / पठतम्)
3. यूयम् .........। (आगच्छताम् / आगच्छतु / आगच्छत / आगच्छतम्)
4. किं वयं ......... ? (लिखाव / लिखानि / लिखत / लिखाम)
5. एषा .........। (शृणोतु / शृणवानि / शृणु)
6. त्वं .........। (जानातु / जानीहि / जानानि / जानीताम्)
7. भवन्तः .........। (जानानि / जानातु / जानन्तु / जानीहि)
8. किं वयं ......... ? (प्रविशानि / प्रविशत / प्रविशाम / प्रविशतु)
9. एते बालकाः तत्र .........। (उपविशत / उपविशतु / उपविशानि / उपविशन्तु)
10. किम् आवाम् अत्र ......... ? (तिष्ठाम / तिष्ठाव / तिष्ठताम् / तिष्ठतम्)
11. भवन्तः स्वकार्यं .........। (करोतु / कुर्वन्तु / कुरु / कुरुताम् / कुरुत)
12. किं वयं स्वकार्यं ......... ? (करवाणि / करवाव / कुर्वन्तु / कुरु / करवाम)
13. एते अपि शीघ्रं स्वकार्यं .........। (करोतु / कुरु / करवाव / कुर्वन्तु)
14. भवान् एतत् फलं .........। (स्वीकुरु / स्वीकरोतु / स्वीकुरुताम् / स्वीकुर्वन्तु)
15. भवती एतत् .........। (जानीहि / जानीताम् / जानातु / जानन्तु)

# [ सम्बोधनम् ]

## 2.3.2 सम्बोधनप्रथमा-एकवचनम्

**ध्यानेन पठन्तु—**

[ध्यान से पढ़िए । Please read carefully. ]



पुत्र ! पिब



पुत्र ! चल



गोविन्द ! पठ



मोहन ! लिख



पुत्र ! खाद



मदन ! मा वद



पुत्र ! शृणु



पुत्र ! आगच्छ ।



बालिके ! पिब ।



लते ! आगच्छ ।



पुत्रि ! लिख ।



गौरि ! उत्तिष्ठ ।

**उदाहरणानुगुणं सम्बोधनरूपाणि लिखन्तु–**

[ उदाहरणों के अनुसार सम्बोधन के रूपों को लिखिए। Write the vocative form of the words given in nominative case. ]

| प्रथमा | सम्बोधनप्रथमा |
|---|---|
| उदा०–रामः | राम ! |
| बालकः | बालक ! |
| पुत्रः | ............ |
| कृष्णः | ............ |
| भरतः | ............ |
| भिक्षुकः | ............ |
| गिरीशः | ............ |
| भास्करः | ............ |
| विवेकः | ............ |
| सीता | सीते ! |
| रमा | ............ |
| सुशीला | ............ |
| भगिनी | भगिनि ! |

स्त्रीलिङ्गे–

**2.3.2 (क) एकवचनम्**

| 'आ' कारान्ताः | | 'ई' कारान्ताः | |
|---|---|---|---|
| प्रथमा | सम्बोधनप्रथमा | प्रथमा | सम्बोधनप्रथमा |
| रमा | ..रमे..!..... | गौरी | .गौरि..!.... |
| सुधा | ............ | पार्वती | ............ |
| गीता | ............ | सरस्वती | ............ |
| बालिका | ............ | सुमती | ............ |
| ललिता | ............ | भगिनी | ............ |
| सुनीता | ............ | देवी | ............ |
| गिरिजा | ............ | नलिनी | ............ |
| अध्यापिका | ............ | शालिनी | ............ |
| वसुन्धरा | ............ | कावेरी | ............ |
| ममता | ............ | नन्दिनी | ............ |

नपुंसकलिङ्गे–

| प्रथमा | सम्बोधनप्रथमा |
|---|---|
| मित्रम् | मित्र ! |

**सम्यक् स्मरन्तु** –

[ ध्यान से स्मरण कीजिए। Learn carefully. ]

| प्रथमा | सम्बोधनप्रथमा |
|---|---|
| अम्बा | अम्ब ! |

## अभ्यासः – 113

**सम्बोधन-प्रथमा-एकवचनस्य प्रयोगाः**

✍ **कोष्ठे प्रदत्तस्य शब्दस्य सम्बोधनरूपेण रिक्तस्थानानि पूरयन्तु–**

[ कोष्ठ में दिए गए शब्दों के सम्बोधन रूप का प्रयोग कर रिक्त स्थानों की पूर्ति कीजिए। Fill in the blanks by using the Vocative form of the words given in the brackets. ]

1. ..उषे.!.. त्वम् आगच्छ। (उषा)
2. ......... त्वं पाठं पठ। (पुत्री)
3. ......... त्वं कोलाहलं न कुरु। (बालकः)
4. ......... त्वं गृहपाठं लिख। (पुत्रः)
5. ......... भवती भोजनं यच्छतु। (अम्बा)
6. ......... त्वं क्षीरं पिब। (कृष्णः)
7. ......... किं पानीयं स्वीकरोति ? (मित्रम्)
8. ......... भवती सङ्कोचं मा अनुभवतु। (सखी)
9. ......... त्वं शीघ्रम् उत्तिष्ठ। (वत्सः)
10. ......... भवान् हस्तं प्रक्षालयतु। (महोदयः)
11. ......... भवान् आसन्दम् अलङ्करोतु। (अध्यक्षमहोदयः)
12. ......... भवान् कृपां प्रदर्शयतु। (देवः)
13. ......... त्वं घटीं पश्य। (बालकः)
14. ......... भवती भोजनं परिवेषयतु। (भगिनी)
15. ......... त्वं कुत्र गच्छसि ? (बालिका)
16. ......... त्वं किं खादसि ? (गणेशः)
17. ......... त्वं श्लोकं वद। (गीता)
18. ......... त्वं कार्यं कुरु। (ललिता)
19. ......... त्वं मा हस। (मूर्खः)
20. ......... त्वम् उत्तरं वद। (शिष्यः)
21. ......... त्वं लेखनीं यच्छ। (गौरी)
22. ......... भवान् समाधानं वदतु। (अध्यापकः)
23. ......... त्वं मा धाव। (पुत्रः)
24. ......... भवान् फलं स्वीकरोतु। (महोदयः)
25. ......... त्वं जलम् आनय। (शारदा)

## 2.3.2 (ख) सम्बोधनप्रथमा त्रिषु वचनेषु

**उदाहरणानुसारं सम्बोधनरूपाणि लिखन्तु–**

[ उदाहरणों के अनुसार सम्बोधन के रूपों को लिखिए। Write down the forms of Vocative case as shown in the examples. ]

| | प्रथमा | | | | | सम्बोधनम् | |
|---|---|---|---|---|---|---|---|
| **पुंल्लिङ्गे:–** | | | | | | | |
| उदा०– | बालकः, | बालकौ, | बालकाः | → | बालक, | बालकौ, | बालकाः |
| 1. | छात्रः, | छात्रौ, | छात्राः | 1. | ......... | ......... | ......... |
| 2. | शिक्षकः, | शिक्षकौ, | शिक्षकाः | 2. | ......... | ......... | ......... |
| 3. | सेवकः, | सेवकौ, | सेवकाः | 3. | ......... | ......... | ......... |
| 4. | शिष्यः, | शिष्यौ, | शिष्याः | 4. | ......... | ......... | ......... |
| **स्त्रीलिङ्गे–** | | | | | | | |
| उदा०– | बालिका, | बालिके, | बालिकाः | → | बालिके, | बालिके, | बालिकाः |
| 5. | महिला, | महिले, | महिलाः | 5. | ......... | ......... | ......... |
| 6. | शिक्षिका, | शिक्षिके, | शिक्षिकाः | 6. | ......... | ......... | ......... |
| 7. | छात्रा, | छात्रे, | छात्राः | 7. | ......... | ......... | ......... |
| 8. | गायिका, | गायिके, | गायिकाः | 8. | ......... | ......... | ......... |
| उदा०– | भगिनी, | भगिन्यौ, | भगिन्यः | → | भगिनि, | भगिन्यौ, | भगिन्यः |
| 9. | देवी, | देव्यौ, | देव्यः | 9. | ......... | ......... | ......... |
| 10. | नर्तकी, | नर्तक्यौ, | नर्तक्यः | 10. | ......... | ......... | ......... |
| 11. | पुत्री, | पुत्र्यौ, | पुत्र्यः | 11. | ......... | ......... | ......... |
| 12. | जननी, | जनन्यौ, | जनन्यः | 12. | ......... | ......... | ......... |
| **नपुंसकलिङ्गे–** | | | | | | | |
| उदा०– | मित्रम् | मित्रे, | मित्राणि | → | मित्र, | मित्रे, | मित्राणि |

# अभ्यासः – 114

## 2.3.2.2 सम्बोधनप्रथमायाः मिश्रिताः प्रयोगाः

✍ **उदाहरणानुगुणं यथोचितं सम्बोधनरूपैः वाक्यानि पूरयन्तु –**

[ उदाहरणों के अनुसार सम्बोधन के रूपों से वाक्यों को पूरा कीजिए। Complete the following sentences with appropriate Vocative forms as shown in the examples. ]

### द्विवचने

उदा०– 1. .....पुत्रौ.... ! युवां पठतम्। (पुत्र)

2. ............. ! युवां पाठं लिखतम्। (शिष्य)

3. ............. ! युवां श्लोकं वदतम्। (बालिका)

4. ............. ! भवन्तौ उपविशताम्। (महोदय)

5. ............. ! युवां खादतम्। (वत्सा)

### बहुवचने

उदा०– 1. अध्यापिकाः... ! भवत्यः पाठयन्तु। (अध्यापिका)

2. ............. ! यूयं मा क्रीडथ। (छात्र)

3. ............. ! यूयं गृहपाठं लिखथ। (बालिका)

4. ............. ! भवत्यः आगच्छन्तु। (भगिनी)

5. ............. ! भवन्तः चित्रं पश्यन्तु। (जन)

2.3.2 (ग) अद्य/ह्यः/परह्यः/प्रपरह्यः
श्वः/परश्वः/प्रपरश्वः

12.2.2001

प्रपरह्यः - द्वादशदिनाङ्कः
प्रपरह्यः - त्रयोदशी तिथिः
प्रपरह्यः - बुधवासरः
प्रपरह्यः - अहं गृहे आसम्
प्रपरह्यः - भवान्/भवती कुत्र अगच्छत्?

13.12.2001

परह्यः - त्रयोदशदिनाङ्कः
परह्यः - चतुर्दशी तिथिः
परह्यः - गुरुवासरः
परह्यः - अहं कार्यालयं प्रविष्टवान्।
परह्यः - अहं लेखनकार्यं सम्पादितवान्।

14.12.2001

ह्यः - चतुर्दशदिनाङ्कः
ह्यः - अमावस्या तिथिः
ह्यः - शुक्रवासरः
ह्यः - रात्रौ गाढान्धकारः आसीत्।
ह्यः - रात्रौ मम गृहे विद्युत् नासीत्।

**15.12.2001**

**अद्य - मार्गशीर्षशुक्लपक्षस्यारम्भः**
**अद्य - सर्वकारीयकार्यालयेषु अवकाशः**
**अद्य - पञ्चदशदिनाङ्कः**
**अद्य - शनिवासरः**

16.12.2001

श्वः - षोडशदिनाङ्कः
श्वः - अपि सर्वत्र अवकाशः
श्वः - रविवासरः
श्वः - द्वितीया तिथिः

17.12.2001

परश्वः - सप्तदशदिनाङ्कः
परश्वः - तृतीया तिथिः
परश्वः - सोमवासरः
परश्वः - ईद–उल्फितर उत्सवः
परश्वः - कार्यालयेषु अवकाशः भविष्यति।

18.12.2001

प्रपरश्वः - अष्टादशदिनाङ्कः
प्रपरश्वः - चतुर्थी तिथिः
प्रपरश्वः - मङ्गलवासरः
प्रपरश्वः - सर्वे कार्यालयान् गमिष्यन्ति। कार्याणि करिष्यन्ति।
प्रपरश्वः - मम जन्मदिवसः
प्रपरश्वः - भवान्/भवती अवश्यम् मम गृहम् आगच्छतु।

# तृतीयः स्तबकः

## 3.1 प्रथमः पाठः

[ भूतकालः (लङ्) ]

**ध्यानेन पठन्तु–**

[ ध्यान से पढ़िए। Please read carefully. ]

**3.1.1 आसीत्**



बुद्धः



बुद्धः पूर्वं राजकुमारः आसीत्।



वृद्धः



वृद्धः पूर्वं युवकः आसीत्।



वृक्षः



वृक्षः पूर्वम् अङ्कुरः आसीत्।

**अग्रे लिखितं पठन्तु–**

[ निम्नलिखित को पढ़िए। Please read the following. ]

अद्य 23–दिनाङ्कः गुरुवासरः च अस्ति।

ह्यः 22–दिनाङ्कः बुधवासरः च आसीत्।

**3.1.1+ अस् / भू**

**ध्यानेन पठन्तु–**

[ ध्यान से पढ़िए। Please read carefully. ]




वृद्धः चिन्तयति।

**रिक्तस्थानानि पूरयन्तु–**

[ रिक्त स्थानों की पूर्ति कीजिए। Fill in the blanks.]

1. अद्य रविवासरः अस्ति। ह्यः शनिवासरः आसीत्।
2. अद्य शनिवासरः अस्ति। ह्यः शुक्रवासरः ............।
3. अद्य शुक्रवासरः अस्ति। ह्यः ........... .........।
4. अद्य गुरुवासरः अस्ति। ...... बुधवासरः .......।
5. अद्य बुधवासरः अस्ति। ह्यः ........... .........।
6. अद्य मङ्गलवासरः अस्ति। ....... सोमवासरः .......।
7. अद्य सोमवासरः अस्ति। ह्यः ........... .........।

## अभ्यासः – 115

*अस्ति / आसीत्*

**यथोचितं क्रियापदरूपं लिखन्तु –**

[ सही क्रियापद लिखिए। Write the correct form of the verbs. ]

उदा०– 1. अङ्कुरः अधुना वृक्षः ........अस्ति.......।

2. युवकः पूर्वं बालकः .........आसीत्.....।

3. वाल्मीकिः पूर्वं व्याधः .....................।

4. गङ्गानदी भारतदेशे .....................।

5. सुभाषचन्द्रबोसः देशभक्तः .....................।

6. विश्वनाथमन्दिरं वाराणस्याम् .....................।

7. पुष्पं पूर्वं कलिका .....................।

8. विवेकानन्दस्य नाम नरेन्द्रः इति.....................।

9. बालकः इदानीं तरुणः .....................।

10. वाराणसी उत्तरप्रदेशे .....................।

### 3.1.2 आसीत्, आस्ताम्, आसन्

✍ **उदाहरणानुगुणं भूतकालरूपाणि लिखन्तु–**
[ उदाहरणों के अनुसार भूतकाल के रूपों को लिखिए। Write down the forms (Rupas) of Past Tense as shown in the examples. ]

| अधुना अस्ति। | | पूर्वम् आसीत्। |
|---|---|---|
| उदा०– 1. | वृक्षः अस्ति। | अङ्कुरः ....आसीत्... । |
| 2. | वृद्धः अस्ति। | युवकः .............। |
| 3. | दरिद्रः अस्ति। | धनिकः .............। |
| 4. | पण्डितः अस्ति। | मन्दः .............। |
| 5. | शान्तः अस्ति। | क्रूरः .............। |
| 6. | कृशः अस्ति। | स्थूलः .............। |

| अधुना स्तः। | | पूर्वम् आस्ताम् |
|---|---|---|
| उदा०– 7. | वृद्धौ स्तः। | बालकौ ...आस्ताम्... । |
| 8. | धनिकौ स्तः। | दरिद्रौ .............। |
| 9. | स्थूलौ स्तः। | कृशौ .............। |
| 10. | क्रूरौ स्तः। | शान्तौ .............। |
| 11. | दुर्जनौ स्तः। | सज्जनौ .............। |
| 12. | सुन्दरौ स्तः। | कुरूपौ .............। |

| अधुना सन्ति। | | पूर्वम् आसन्। |
|---|---|---|
| उदा०– 13. | श्वेतकेशाः सन्ति। | कृष्णकेशाः आसन्। |
| 14. | दन्ताः न सन्ति। | दन्ताः ...आसन्.... । |
| 15. | फलानि पक्वानि सन्ति। | फलानि अपक्वानि .............। |
| 16. | नायकाः सन्ति। | नृपाः .............। |
| 17. | यानानि सन्ति। | शकटाः .............। |
| 18. | राज्यानि 28 सन्ति। | राज्यानि 25 .............। |

### 3.1.3 आसीः, आस्तम्, आस्त

**उदाहरणानुगुणं भूतकालिकरूपैः वाक्यानि पूरयन्तु–**
[ उदाहरणों के अनुसार भूतकाल के रूपों से वाक्यों को पूरा कीजिए। Complete the following sentences with the forms of verbs in past tense. ]

| | अधुना त्वं ......... असि। | पूर्वं त्वं ......... आसीः। |
|---|---|---|
| उदा०– 1. | त्वं नवमकक्ष्यायाम् असि। | त्वम् अष्टमकक्ष्यायाम् आसीः। |
| 2. | त्वं चतुरः असि। | त्वं मूर्खः ....आसीः.... । |
| 3. | त्वं प्रवीणः असि। | त्वं मन्दः ............. । |
| 4. | त्वं कृशः असि। | त्वं स्थूलः ............. । |
| 5. | त्वं भारते असि। | त्वं विदेशे ............. । |

| | अधुना युवां ......... स्थः। | पूर्वं युवां ......... आस्तम्। |
|---|---|---|
| उदा०– 6. | युवां स्वस्थौ स्थः। | युवां रुग्णौ ....आस्तम्.... । |
| 7. | युवां मूर्खौ स्थः। | युवां पण्डितौ ............. । |
| 8. | युवां सबलौ स्थः। | युवां दुर्बलौ ............. । |
| 9. | युवां धीरौ स्थः। | युवां भीतौ ............. । |
| 10. | युवां युवकौ स्थः। | युवां बालौ ............. । |

| | अधुना यूयं ......... स्थ। | पूर्वं यूयं ......... आस्त। |
|---|---|---|
| उदा०– 11. | यूयम् अध्यापकाः स्थ। | यूयं छात्राः आस्त। |
| 12. | यूयं सरलाः स्थ। | यूयम् उद्दण्डाः ............. । |
| 13. | यूयम् आचार्याः स्थ। | यूयं शिक्षकाः ............. । |
| 14. | यूयं बालकाः स्थ। | यूयं शिशवः ............. । |
| 15. | यूयं देहलीनगरे स्थ। | यूयं वाराणसीनगरे ............. । |

## अभ्यासः – 173

**ईकारान्तस्त्रीलिङ्गशब्दानां तृतीया–एकवचने प्रयोगाः**

✍ **उदाहरणानुसारं रिक्तस्थानानि पूरयन्तु–**
[उदाहरण के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Please fill in the blanks as shown in the example.]

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| उदा०– 1. | जननी | – | दर्वी | 1. | ...जनन्या... | ...दर्व्या... | आलोडयति। |
| 2. | गृहिणी | – | वेल्लनी | 2. | .......... | .......... | निर्माति। |
| 3. | शिक्षकः | – | लेखनी | 3. | .......... | .......... | लिखति। |
| 4. | चित्रकारः | – | अङ्कनी | 4. | .......... | .......... | अङ्कयति। |
| 5. | वैज्ञानिकः | – | क्षेपणी | 5. | .......... | .......... | गच्छति। |
| 6. | बालिका | – | कर्तरी | 6. | .......... | .......... | कर्तयति। |
| 7. | गृहिणी | – | चालनी | 7. | .......... | .......... | चालयति। |
| 8. | वैद्यः | – | औषधसूची | 8. | .......... | .......... | चिकित्सति। |
| 9. | सः | – | कूपी | 9. | .......... | .......... | जलं नयति। |
| 10. | सरिता | – | सूची | 10. | .......... | .......... | सीव्यति। |

## अभ्यासः – 174

**तृतीया–एकवचने विविधाः प्रयोगाः**

✍ **उदाहरणानुगुणं कोष्ठके दत्तेन शब्देन सह तृतीयाविभक्तिं संयोज्य रिक्तस्थानानि पूरयन्तु–**
[उदाहरण के अनुसार कोष्ठक में दिये गये शब्दों के साथ तृतीयाविभक्ति जोड़कर रिक्त स्थानों की पूर्ति कीजिए। Complete the sentences by adding third case ending to the words given in the brackets.]

**बालकः**

1. ..कन्दुकेन.. कन्दुकम् क्रीडति ।
2. ........... सुधाखण्डः लिखति ।
3. ........... द्विचक्रिका गच्छति ।
4. ........... कूर्चः चित्रं रचयति ।
5. ........... यानम् गच्छति ।

**गृहिणी**

6. ........... अङ्कनी चित्रम् अङ्कयति ।
7. ........... वेल्लनी रोटिकाः निर्माति ।
8. ........... नौका नदीं तरति ।
9. ........... घटः जलम् आनयति ।
10. ........... चालनी तण्डुलं परिष्करोति ।

**वृद्धाः**

11. ........... दण्डः चलन्ति ।
12. ........... उपनेत्रम् पश्यन्ति ।
13. ........... पादौ गच्छन्ति ।
14. ........... चमसः खादन्ति ।
15. ........... कर्तरी कर्तयन्ति ।

# अभ्यासः – 175

**तृतीया–एकवचने मिश्रिताः प्रयोगाः**

**कोष्ठगतेन शब्देन सह तृतीयां संयोज्य वाक्यं पूरयन्तु–**

[ कोष्ठ में दिये गये शब्द के साथ तृतीया जोड़कर वाक्य पूरा कीजिए। Complete the sentence by adding third case ending to the words given in brackets. ]

**बालकः**

| | | | |
|---|---|---|---|
| 1. | लेखनी | ..लेखन्या... | लिखति। |
| 2. | दण्डः | .......... | कृष्णपटं दर्शयति। |
| 3. | अङ्गुली | .......... | निर्दिशति। |
| 4. | हस्तः | .......... | यानं स्थगयति। |
| 5. | अङ्गुली | .......... | गणयति। |

**कृषकः**

| | | | |
|---|---|---|---|
| 6. | हलः | ...हलेन... | कर्षति। |
| 7. | कुम्भः | .......... | सिञ्चति। |
| 8. | कुठारः | .......... | छिनत्ति। |
| 9. | खनित्रम् | .......... | खनति। |
| 10. | लवित्रम् | .......... | लुनाति। |

## अभ्यासः – 176

तृतीयारूपाणि

✍ **उदाहरणानुगुणं रूपाणि लिखन्तु–**

[ उदाहरणों के अनुसार रूपों को लिखिए। Write the forms in third case ending as shown in the examples. ]

| | | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|---|
| उदा०– | 1. दण्डः – | ..दण्डेन.. | ..दण्डाभ्याम्.. | ....दण्डैः...... |
| | 2. सुधाखण्डः – | .......... | .............. | ................ |
| | 3. दीपः – | .......... | .............. | ................ |
| | 4. वृक्षः – | .......... | .............. | ................ |
| | 5. सर्पः – | .......... | .............. | ................ |
| | 6. मकरः – | .......... | .............. | ................ |
| उदा०– | 7. यानम् – | ..यानेन... | ..यानाभ्याम्... | ......यानैः...... |
| | 8. पुस्तकम् – | .......... | .............. | ................ |
| | 9. सोपानम् – | .......... | .............. | ................ |
| | 10. पुष्पम् – | .......... | .............. | ................ |
| | 11. पदम् – | .......... | .............. | ................ |
| उदा०– | 12. द्विचक्रिका – | द्विचक्रिकया. | द्विचक्रिकाभ्याम्. | ..द्विचक्रिकाभिः... |
| | 13. लता – | .......... | .............. | ................ |
| | 14. दोला – | .......... | .............. | ................ |
| | 15. पुस्तिका – | .......... | .............. | ................ |
| | 16. सन्दंशिका – | .......... | .............. | ................ |
| उदा०– | 17. लेखनी – | ..लेखन्या.. | .लेखनीभ्याम्.. | ....लेखनीभिः..... |
| | 18. घटी – | .......... | .............. | ................ |
| | 19. सूची – | .......... | .............. | ................ |
| | 20. दर्वी – | .......... | .............. | ................ |

तृतीयारूपाणि

**ध्यानेन पठन्तु–**
[ ध्यान से पढ़िए। Read carefully. ]

| | | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|---|
| एतत् | पुं० | एतेन | एताभ्याम् | एतैः |
| | नपुं० | एतेन | एताभ्याम् | एतैः |
| | स्त्री० | एतया | एताभ्याम् | एताभिः |
| तत् | पुं० | तेन | ताभ्याम् | तैः |
| | नपुं० | तेन | ताभ्याम् | तैः |
| | स्त्री० | तया | ताभ्याम् | ताभिः |
| भवत् | पुं० | भवता | भवद्भ्याम् | भवद्भिः |
| | नपुं० | भवता | भवद्भ्याम् | भवद्भिः |
| | स्त्री० | भवत्या | भवतीभ्याम् | भवतीभिः |
| सर्व | पुं० | सर्वेण | सर्वाभ्याम् | सर्वैः |
| | नपुं० | सर्वेण | सर्वाभ्याम् | सर्वैः |
| | स्त्री० | सर्वया | सर्वाभ्याम् | सर्वाभिः |
| अस्मद् | पुं० | मया | आवाभ्याम् | अस्माभिः |
| | नपुं० | मया | आवाभ्याम् | अस्माभिः |
| | स्त्री० | मया | आवाभ्याम् | अस्माभिः |
| युष्मद् | पुं० | त्वया | युवाभ्याम् | युष्माभिः |
| | नपुं० | त्वया | युवाभ्याम् | युष्माभिः |
| | स्त्री० | त्वया | युवाभ्याम् | युष्माभिः |

## अभ्यासः – 177

**तृतीया–द्विवचने प्रयोगाः**

**चित्रानुगुणं रिक्तस्थानानि पूरयन्तु–**

[ चित्रों के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Fill in the blanks as per the pictures. ]

उदा0–

**वयं**

1. ...नेत्राभ्यां...  पश्यामः।
2. ...........  शृणुमः।
3. ...........  चलामः।
4. ...........  नयामः।

## अभ्यासः – 177+

**उदाहरणानुगुणं तृतीयाद्विवचनरूपैः रिक्तस्थानानि पूरयन्तु–**

[ उदाहरण के अनुसार तृतीया द्विवचन के रूपों से रिक्त स्थानों की पूर्ति कीजिए। Fill in the blanks with words ending in third case. ]

उदा0–
1. कुलालः (दण्डौ) ......दण्डाभ्यां...... वस्तु उन्नयति।
2. अर्चकः (दर्भौ) .................. जलं सिञ्चति।
3. माता (चषकौ) .................. क्षीरं शीतलीकरोति।
4. पाचकः (चुल्ल्यौ) .................. पाकं करोति।
5. अर्जुनः (हस्तौ) .................. बाणप्रयोगं करोति।
6. सा (अङ्गुल्यौ) .................. शब्दं करोति।
7. कर्मकरी (द्रोण्यौ) .................. जलम् आनयति।
8. कृषकः (वृषभौ) .................. क्षेत्रं कर्षति।
9. मातुलः (मुष्ट्यौ) .................. प्रहरति।
10. कारयानं (चक्रे) .................. न चलति।
11. बालकः (नेत्रे) .................. पश्यति।

**त्रिषु वचनेषु तृतीयायाः प्रयोगाः [पादेन / पादाभ्याम्/ पादैः]**

**ध्यानेन पठन्तु–**

[ ध्यान से पढ़िए। Read carefully.]

| | | |
|---|---|---|
| बकः | एकेन पादेन | तिष्ठति। |
| वयं | पादाभ्यां | चलामः। |
| हरिणाः | पादैः | चलन्ति। |

## अभ्यासः – 178

**पादेन / पादाभ्याम् / पादैः**

**रिक्तस्थानानि पूरयन्तु–**

[ रिक्त स्थानों की पूर्ति कीजिए। Fill in the blanks. ]

उदा०– 1. गजाः .....पादैः.....

2. अश्वाः .............

3. मनुष्याः ..पादाभ्याम्..

4. खञ्जाः .............

5. बकाः .............

6. वानराः .............

7. जनाः .............

8. वनमानवाः .............

9. शुकाः .............

10. चटकाः .............

चलन्ति।

## अभ्यासः – 179

**तृतीयायाः त्रिषु वचनेषु प्रयोगाः**

✍ **उदाहरणानुसारं अथवा कोष्ठगतेन शब्देन सह तृतीयाविभक्तिं संयोज्य रिक्तस्थानानि पूरयन्तु-**
[उदाहरण के अनुसार कोष्ठ में दिये गये शब्दों के साथ तृतीया विभक्ति जोड़कर रिक्त स्थानों की पूर्ति कीजिए। Complete the following sentences by adding third case ending to the words given in brackets.]

| लिखति | शृणोति | पश्यति | गच्छति |
|---|---|---|---|

कः केन किं करोति ?

यथा– 1. वृद्धः ...दण्डेन... (दण्डः) गच्छति।
2. छात्रः ........... (लेखनी) लिखति।
3. वयं ........... (कर्णौ) शृणुमः।
4. वयं ........... (पादौ) चलामः।
5. वयं ........... (हस्तः) लिखामः।
6. वयं ........... (मुखम्) वदामः।
7. वयं ........... (जिह्वा) माधुर्यम् अनुभवामः।
8. भक्ताः ........... (हृदयम्) ईश्वरम् अर्चन्ति।
9. सिंहाः ........... (नखाः) जीवान् पीडयन्ति।
10. जनाः ........... (नेत्रे) पश्यन्ति।
11. वानराः ........... (दन्ताः) खादन्ति।
12. गृहिण्यः ........... (घटाः) जलम् आनयन्ति।
13. बालिका ........... (चमसः) मिश्रयति।
14. बालकः ........... (नासिका) जिघ्रति।
15. महिला ........... (कङ्कतम्) प्रसाधयति।

## अभ्यासः – 180

**तृतीयायाम् अन्ये प्रयोगाः**

✍ **उदाहरणानुसारं कोष्ठगते शब्दे तृतीयां संयोज्य रिक्तस्थानानि पूरयन्तु–**

[ उदाहरण के अनुसार कोष्ठ में दिये गये शब्दों में तृतीया विभक्ति जोड़कर रिक्त स्थानों की पूर्ति कीजिए। Complete the following sentences by adding third case ending to the words given in brackets. ]

उदा०– 1. वयम् ......आनन्देन...... निवसामः। (आनन्दः)

2. ते .................... जीवन्ति। (कष्टम्)

3. सः .................... वसति। (सुखम्)

4. हरीशः .................... तिष्ठति। (सन्तोषः)

5. शिक्षकः .................... ताडयति। (कोपः)

6. अलसः .................... जीवति। (आलस्यम्)

7. जननी .................... पाकं करोति। (अनायासः)

8. दुःखितः .................... वदति। (उद्वेगः)

9. सन्तुष्टः .................... जीवति। (वैराग्यम्)

10. जनाः .................... निवसन्ति। (शान्तभावः)

11. ताः .................... कालं यापयन्ति। (वार्तालापः)

12. एताः .................... दिनं यापयन्ति। (जल्पनम्)

13. वृद्धः .................... घण्टां यापयति। (पठनम्)

14. बालकः .................... द्विचक्रिकां चालयति। (क्रीडा)

15. सचिवः .................... सन्तोषं जनयति। (आगमनम्)

16. गृहजनः .................... स्वागतीकरोति। (आदरः)

17. अलसः .................... कार्यं करोति। (उपेक्षा)

18. त्वम् .................... मा व्यवहर। (ईर्ष्या)

19. दरिद्रः .................... धनिकं पश्यति। (असूया)

20. भवान् .................... कीर्तिं प्राप्नोतु। (त्यागः)

## अभ्यासः – 181

भाववाचकानां प्रयोगे तृतीया

**उदाहरणानुगुणं रिक्तस्थानानि पूरयन्तु–**

[उदाहरण के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Fill in the blanks as shown in the example.]

उदा०– 1. सः .....समीचीनतया..... लिखति। (समीचीनतया)

2. अध्यापकः .................... पाठयति। (सरलता)

3. छात्रा .................... लिखति। (स्पष्टता)

4. चित्रकारः .................... चित्रं करोति। (सुचारुता)

5. कृषकः .................... कर्षति। (पूर्णता)

6. व्याख्याकारः .................. व्याख्यां करोति। (स्पष्टता)

7. कविः .................... निवसति। (एकाकिता)

8. महिला .................... व्यवहरति। (भीरुता)

9. राक्षसः .................... गर्जति। (भयङ्करता)

10. व्याघ्रः .................... पश्यति। (क्रूरता)

11. तरुणी .................... लिखति। (सुन्दरता)

12. सः .................... कटं प्रसारयति। (विशालता)

13. सज्जनः .................... जीवति। (ऋजुता)

14. जननी .................... पाकं कृतवती। (मधुरता)

15. वैद्यः .................... शल्यचिकित्सां कृतवान्। (समर्थता)

16. ग्रन्थकारः .................... ग्रन्थं रचयति। (विस्तृतता)

17. कथाकारः .................... कथां कथयति। (मनोरञ्जकता)

18. ग्रामीणः .................... नगरं दृष्टवान्। (इदम्प्रथमता)

19. ऐन्द्रजालिकः.................... कौशलं दर्शयति। (आकस्मिकता)

## अभ्यासः – 182

**तृतीयायां मिश्रिताः प्रयोगाः**

**उदाहरणानुसारं रिक्तस्थानानि पूरयन्तु–**

[ उदाहरणों के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Fill in the blanks as shown in the examples.]

उदा०– 1. बालकः (द्विचक्रिका) ....द्विचक्रिकया.... गच्छति।
2. वैदेशिकाः (विमानम्) .................... भारतं द्रष्टुम् आगच्छन्ति।
3. नवपरिणीता (शिबिका) .................... श्वसुरगृहं गच्छति।
4. वयम् (अश्वशकटः) .................... गच्छामः।
5. यूयं (रथः) .................... कुत्र गच्छथ ?
6. जनाः (लोकयानम्) .................... यात्रां कुर्वन्ति।
7. एतौ (वृषभशकटः) .................... ग्रामं गच्छतः।

उदा०– 8. अहं (संस्कृतम्) ....संस्कृतेन.... वदामि।
9. गूर्जराः (गूर्जरभाषा) .................... वदन्ति।
10. भारतीयाः (राष्ट्रभाषा) .................... वदन्ति।
11. बालकाः (मातृभाषा) .................... व्यवहरन्ति।
12. इदानीं केचन एव (पालीभाषा) .................... वक्तुं शक्नुवन्ति।
13. इदानीं लक्षाधिकाः जनाः (संस्कृतभाषा) .................... व्यवहरन्ति।

उदा०– 14. एतां लेखनीम् अहं (विंशतिरूप्यकाणि) विंशतिरूप्यकैः... क्रीतवती।
15. सा (एकं रूप्यकम्) .................... चाकलेहं क्रेतुम् इच्छति।
16. वयं (दशरूप्यकाणि) ............... चलचित्रचिटिकां क्रीत्वा चलचित्रं पश्यामः।
17. एते धनिकाः (सहस्ररूप्यकाणि) ....... वायुयानचिटिकां क्रीत्वा भ्रमितुं गच्छन्ति।
18. आवां (द्वे रूप्यके) इच्छावः .............. फलं क्रेतुम् इच्छावः।
19. ताः (शतरूप्यकाणि) .................... वस्त्राणि क्रीतवत्यः।
20. एषः (लक्षरूप्यकाणि) .................... भवनं क्रीतवान्।

## ध्यानेन पठन्तु–

**सह–योगे तृतीया**

[ ध्यान से पढ़िए। Please read carefully. ]



जनकः



पुत्रः



जनकः **पुत्रेण** सह अस्ति।



अनुजः



अग्रजा



अनुजः **अग्रजया** सह उपविशति।



वृद्धा



पौत्री



वृद्धा **पौत्र्या** सह उपविशति।



पुत्रः



जननी



पुत्रः **जनन्या** सह गच्छति।

**ध्यानेन पठन्तु–**

[ ध्यान से पढ़िए। Please read carefully. ]



त्वं मया सह चल।



अहं भवता सह आगच्छामि।



त्वं मया सह आगच्छ।



त्वं मया सह उपरि चल।



त्वं मया सह क्रीड।



अहं भवता सह खादामि।

# अभ्यासः – 183

**सह–योगे तृतीया**

**उदाहरणानुगुणं रिक्तस्थानानि पूरयन्तु–**

[ उदाहरणों के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Fill in the blanks as shown in the examples. ]

**अहं**

| उदा०– | | | |
|---|---|---|---|
| 1. | ...पुत्रेण... | पुत्रः | सह खेलामि। |
| 2. | ........... | जनाः | सह तरामि। |
| 3. | ........... | जनकः | सह वार्तालापं करोमि। |
| 4. | ........... | मित्रम् | सह गृहं गच्छामि। |
| 5. | ........... | अनुजः | सह आगच्छामि। |

**आवां**

| उदा०– | | | |
|---|---|---|---|
| 1. | ...त्वया... | त्वम् | सह गच्छावः। |
| 2. | ........... | मित्रम् | सह भ्रमावः। |
| 3. | ........... | भवान् | सह चलावः। |
| 4. | ........... | लता | सह उपविशावः। |
| 5. | ........... | सः | सह वदावः। |

**वयं**

| उदा०– | | | |
|---|---|---|---|
| 1. | ...मित्रैः... | मित्राणि | सह पठामः। |
| 2. | ........... | बालकाः | सह धावामः। |
| 3. | ........... | छात्राः | सह निवसामः। |
| 4. | ........... | बालिका | सह खादामः। |
| 5. | ........... | पर्यटकाः | सह दर्शनं कुर्मः। |

## अभ्यासः – 184

**सह–योगे तृतीया**

**उदाहरणानुगुणं रिक्तस्थानानि पूरयन्तु–**

[उदाहरण के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Fill in the blanks as shown in the example.]

| | | | |
|---|---|---|---|
| उदा०– 1. रामः | सीता | रामः ...सीतया..... सह गच्छति। | |
| 2. कृष्णः | राधा | ........... ........... ........... | विहरति। |
| 3. मोहनः | राकेशः | ........... ........... ........... | भ्रमति। |
| 4. कृषकः | हलम् | ........... ........... ........... | क्षेत्रं गच्छति। |
| 5. मित्रम् | मित्रम् | ........... ........... ........... | आलपति। |
| 6. अध्यापकः | शिष्यः | ........... ........... ........... | उपविशति। |
| 7. जननी | पुत्री | ........... ........... ........... | अन्नं पचति। |
| 8. अनुराधा | मातुलः | ........... ........... ........... | आपणं गच्छति। |
| 9. भगिनी | अग्रजः | ......... ........ ........... | विद्यालयं गच्छति। |
| 10. सुधीरः | पत्नी | ......... ......... ......... | चलचित्रं द्रष्टुम् इच्छति। |
| 11. वृद्धः | वृद्धा | ......... ......... ......... | वार्त्तां करोति। |
| 12. बालिकाः | अध्यापिकाः | ......... ......... ......... | राष्ट्रगीतं गायन्ति। |
| 13. सचिवः | लिपिकाराः | ......... ......... ......... | आलपति। |
| 14. प्रबन्धकः | कर्मकराः | ......... ......... ......... | व्यवस्थां पश्यति। |
| 15. अभिनायकाः | अभिनेत्र्यः | ......... ......... ......... | नृत्यन्ति। |

## अभ्यासः – 185

सर्वनामशब्दानां तृतीयारूपाणि

✍ **उदाहरणानुगुणं रिक्तस्थानानि तृतीयान्तपदैः पूरयन्तु–**

[ उदाहरण के अनुसार तृतीयान्त पदों से रिक्त स्थानों की पूर्ति कीजिए। Fill in the blanks with words ending in third case as per the example. ]

| उदा०– | 1. | ....मया.... | (अहम्) | |
|---|---|---|---|---|
| | 2. | ............ | (भवान्) | |
| | 3. | ............ | (भवती) | |
| | 4. | ............ | (सः) | |
| | 5. | ............ | (एषः) | |
| | 6. | ............ | (सा) | |
| | 7. | ............ | (त्वम्) | |
| | 8. | ............ | (एषा) | |
| | 9. | ............ | (वयम्) | |
| सः | 10. | ............ | (भवन्तः) | सह गच्छति। |
| | 11. | ............ | (यूयम्) | |
| | 12. | ............ | (भवत्यः) | |
| | 13. | ............ | (ते छात्राः) | |
| | 14. | ............ | (ताः बलिकाः) | |
| | 15. | ............ | (एतौ) | |
| | 16. | ............ | (आवाम्) | |
| | 17. | ............ | (युवाम्) | |
| | 18. | ............ | (भक्तौ) | |
| | 19. | ............ | (भवत्यौ) | |
| | 20. | ............ | (तौ) | |

## अभ्यासः – 186

**सह–योगे तृतीयाप्रयोगाः**

**उदाहरणानुसारं रिक्तस्थानेषु तृतीया बहुवचनरूपाणि लिखन्तु–**

[ उदाहरण के अनुसार रिक्त स्थानों में तृतीया विभक्ति के बहुवचन के रूपों को लिखिए। Fill in the blanks with words in third case ending in plural number as per the example. ]

उदा०– 1. ते ..अस्माभिः.. सह क्रीडन्ति। (वयम्)
2. वयं ............ सह पठामः। (ताः)
3. अहं ............ सह खेलामि। (यूयम्)
4. सः .... .......... सह आगच्छति। (भवन्तः)
5. यूयं ............ सह क्रीडथ। (वानराः)
6. जननी ............ सह गच्छति। (बालिकाः)
7. गोपालः ............ सह प्रत्यागच्छति। (वत्साः)
8. त्वं ............ सह आगच्छ। (मित्राणि)
9. सा ...... ...... सह सम्भाषणं करोति। (ते बालिके)
10. जननी ............ सह पचति। (पुत्र्यः)
11. ............ सह का आसीत् ? (भवत्यः)
12. ............ सह अध्यापिका आसीत्। (वयम्)
13. ............ सह मृदुतया व्यवहरतु। (सर्वे)
14. ग्रामीणः ............ सह विपणिं गच्छति। (परिवारजनाः)
15. भवन्तः ............ सह मा भ्रमन्तु। (दुष्टाः)
16. सर्वे जनाः ............ सह उपवेष्टुम् इच्छन्ति। (सज्जनाः)
17. अध्यापकः ............ सह पुस्तकालयं गच्छति। (वयम्)
18. यूयम् ............ सह कुत्र अगच्छत ? (एताः)
19. पुत्रः ............ सह गन्तुम् इच्छति। (जननी)
20. वयम् ..... .......... सह उपवेष्टुम् इच्छामः। (एते बालिके)

## अभ्यासः – 187

**सह–योगे तृतीयाप्रयोगाः**

**उदाहरणानुगुणं तृतीयान्तपदैः रिक्तस्थानानि पूरयन्तु–**

[उदाहरण के अनुसार तृतीयान्त पदों से रिक्त स्थानों की पूर्ति कीजिए। Fill in the blanks with words ending in third case as per the example.]

| | | | | | |
|---|---|---|---|---|---|
| उदा०– | 1. | छात्राः | अध्यापकैः | सह प्रयोगशालां गच्छन्ति। | (अध्यापकाः) |
| | 2. | बालिकाः | ............ | सह देवालयम् आगच्छन्ति। | (सख्यः) |
| | 3. | वृद्धः | ............ | सह आपणं गच्छति। | (बालकः) |
| | 4. | यूयम् | ............ | सह कन्दुकेन क्रीडत। | (वयम्) |
| | 5. | वयं | ............ | सह चायं पिबामः। | (यूयम्) |
| | 6. | अहम् | ............ | सह न वदामि। | (एते) |
| | 7. | तरुणाः | ............ | सह भ्रमणं कुर्वन्ति। | (वृद्धाः) |
| | 8. | कुक्कुराः | ............ | सह धावन्ति। | (वानराः) |
| | 9. | वत्साः | ............ | सह जलं पिबन्ति। | (अजाः) |
| | 10. | हंसाः | ............ | सह तरन्ति। | (बकाः) |

## 4.3.3 विना–योगे तृतीया

**ध्यानेन पठन्तु–**

[ ध्यान से पढ़िए। Please read carefully. ]



रामेण ....सह.... सीता अस्ति।



रामेण <u>विना</u> सीता अस्ति।



पुत्रेण <u>सह</u> जनकः अस्ति।



पुत्रेण <u>विना</u> जनकः अस्ति।

## अभ्यासः – 188

**विना–योगे तृतीया प्रयोगाः**

**मञ्जूषातः उचितं पदं चित्वा तस्य उचितेन रूपेण रिक्तस्थानानि पूरयन्तु–**
[मञ्जूषा में प्रदत्त पदों के उचितरूपों से रिक्तस्थानों की पूर्ति कीजिए। Fill in the blanks with suitable forms of words from the box.]

उदा०– 1. मीनाः ....जलेन..... विना न जीवन्ति।

2. बालः .............. विना रोदिति।

3. दुर्जनाः .............. विना न तिष्ठन्ति।

4. महिलाः .............. विना न उपविशन्ति।

5. अध्यापकाः .............. विना न वसन्ति।

6. बालकाः .............. विना मूर्खाः भवन्ति।

7. जनाः .............. विना दुर्बलाः भवन्ति।

8. वृद्धः .............. विना न चलति।

9. अन्धकारः .............. विना न अपगच्छति।

| | | | |
|---|---|---|---|
| *अपकारः,* | *जलम्,* | *अन्नम्* | *वार्ता,* |
| *पुस्तकानि,* | *अध्ययनम्,* | *सूर्यः,* | *दुग्धम्,* |
| *दण्डः* | | | |

## अभ्यासः – 189

*विना–योगे तृतीयाप्रयोगाः*

**उदाहरणानुगुणं रिक्तस्थानानि पूरयन्तु–**
[ उदाहरण के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Fill in the blanks as shown in the example. ]

उदा०– 1. जननी ...पुत्राभ्यां... विना आपणं गतवती। (पुत्रौ)

2. अध्यापकाः .............. विना प्रयोगशालां गच्छन्ति। (छात्राः)

3. मीनाः .............. विना न जीवन्ति। (जलम्)

4. सुखं .............. विना न मिलति। (दुःखम्)

5. लेखकः .............. विना न तिष्ठति। (पुस्तकानि)

6. कुमुदम् .............. विना न विकसति। (चन्द्रः)

7. खगः .............. विना न गच्छति। (पतत्रे)

8. खाद्यं .............. विना रुचिकरं न भवति। (लवणम्)

9. गृहं .............. विना निरर्थकं भवति। (गृहिणी)

10. शास्त्रम् ............. विना नश्यति। (अभ्यासम्)

## अभ्यासः – 190

*सह / विना – योगे तृतीयाप्रयोगाः*

**उदाहरणानुगुणं रिक्तस्थानानि पूरयन्तु–**

[उदाहरण के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Fill in the blanks as shown in the example.]

| | | | | |
|---|---|---|---|---|
| उदा०– 1. | ....रामः.. | ....सीतया.. | रामः / सीता | सह वनं गच्छति। |
| 2. | ......... | ............ | लक्ष्मणः / उर्मिला | विना वनं गच्छति। |
| 3. | ......... | ............ | जननी / पुत्री | विना न तिष्ठति। |
| 4. | ......... | ............ | जनकः / पुत्रः | सह मन्दिरम् आगच्छति। |
| 5. | ......... | ............ | दशरथः / रामः | विना न जीवति। |
| 6. | ......... | ............ | अनुजः / अग्रजः | सह प्रातः भ्रमणं करोति। |
| 7. | ......... | ............ | स्वास्थ्यम् / व्यायामः | विना न भवति। |
| 8. | ......... | ............ | कमलम् / सूर्यः | विना न विकसति। |
| 9. | ......... | ............ | शास्त्राभ्यासः / पठनम् | विना न भवति। |
| 10. | ......... | ............ | कमलम् / पङ्कः | विना न भवति। |

# चतुर्थः स्तबकः
## 4.4. चतुर्थः पाठः
[ चतुर्थी ]

**ध्यानेन पठन्तु–**

[ ध्यान से पढ़िए। Please read carefully. ]

### 4.4.1. दानार्थे चतुर्थी



गृहिणी



भिक्षुकः



गृहिणी **भिक्षुकाय** भिक्षां यच्छति (ददाति)।



कर्णः



इन्द्रः



कर्णः **इन्द्राय** कवचं कुण्डलं च यच्छति।



एकलव्यः



द्रोणाचार्यः



एकलव्यः **द्रोणाचार्याय** अङ्गुष्ठं यच्छति।



शिष्यः



आचार्यः



शिष्यः **आचार्याय** गुरुदक्षिणां ददाति।



जननी



बालकः



जननी बालकाय दुग्धं यच्छति ।



अग्रजः



अनुजा



अग्रजः अनुजायै वस्त्रं ददाति ।



पतिः



पत्नी



पतिः पत्न्यै उपहारं ददाति ।



जनकः



पुत्री



जनकः पुत्र्यै धनं ददाति ।

# अभ्यासः – 191

दानार्थे चतुर्थी

**अधोलिखितानि वाक्यानि उदाहरणानुगुणं पूरयन्तु–**

[उदाहरणों के अनुसार अधोलिखित वाक्यों की पूर्ति कीजिए। Complete the following sentences as shown in the examples.]

| | | |
|---|---|---|
| उदा० – | 1. जननी, ..पुत्रः...... । | 1. जननी ...पुत्राय... मोदकं.. यच्छति ददाति । |
| | 2. अध्यापकः, छात्रः । | 2. अध्यापकः ........... पुस्तकं यच्छति । |
| | 3. भक्तः, सूर्यः । | 3. ........... ......... अर्घ्यं यच्छति । |
| | 4. अर्चकः, देवः । | 4. ........... ......... पुष्पं यच्छति । |
| | 5. पूजकः, भक्तः । | 5. ........... ......... प्रसादं यच्छति । |
| उदा० – | 6. अग्रजः, ..अनुजा.. । | 6. ...अग्रजः... ..अनुजायै अङ्कनीं यच्छति । |
| | 7. जनकः, कन्या । | 7. ........... ......... कर्कटीं यच्छति । |
| | 8. बालकः, पाचिका । | 8. ........... ......... वेल्लनीं यच्छति । |
| | 9. शिक्षकः, छात्रा । | 9. ........... ......... लेखनीं यच्छति । |
| | 10. गृहिणी, बुभुक्षिता । | 10. ........... ......... भोजनं यच्छति । |
| उदा० – | 11. जननी, ...पुत्री... । | 11. ....जननी... ...पुत्र्यै.. मालां यच्छति । |
| | 12. गृहस्थः, गृहिणी । | 12. ........... ......... शाटिकां यच्छति । |
| | 13. पाचकः, विद्यार्थिनी । | 13. ........... ......... रोटिकां यच्छति । |
| | 14. धनिकः, भिक्षुकी । | 14. ........... ......... वस्त्रं यच्छति । |
| | 15. वैद्यः, नन्दिनी । | 15. ........... ......... औषधं यच्छति । |

## अभ्यासः – 192

**चतुर्थीरूपाणि**

**उदाहरणानुसारं रिक्तस्थानानि पूरयन्तु–**

[उदाहरणों के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Fill in the blanks as shown in the examples.]

| | | | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|---|---|
| उदा०– | 1. | दण्डः – | दण्डाय | दण्डाभ्याम् | दण्डेभ्यः। |
| पुं०– | 2. | सुधाखण्डः – | ………… | ………… | …………। |
| | 3. | वृक्षः – | ………… | ………… | …………। |
| | 4. | सर्पः – | ………… | ………… | …………। |
| | 5. | दीपः – | ………… | ………… | …………। |
| | 6. | रामः – | ………… | ………… | …………। |
| नपुं०– | 7. | यानम् – | यानाय | यानाभ्याम् | यानेभ्यः। |
| | 8. | सोपानम् – | ………… | ………… | …………। |
| | 9. | पुस्तकम् – | ………… | ………… | …………। |
| | 10. | पत्रम् – | ………… | ………… | …………। |
| | 11. | पुष्पम् – | ………… | ………… | …………। |
| | 12. | यन्त्रम् – | ………… | ………… | …………। |
| स्त्री०– | 13. | द्विचक्रिका – | द्विचक्रिकायै | द्विचक्रिकाभ्याम् | द्विचक्रिकाभ्यः। |
| | 14. | लता – | ………… | ………… | …………। |
| | 15. | माला – | ………… | ………… | …………। |
| | 16. | पुस्तिका – | ………… | ………… | …………। |
| | 17. | पाठशाला – | ………… | ………… | …………। |
| | 18. | शाटिका – | ………… | ………… | …………। |
| | 19. | अङ्कनी – | अङ्कन्यै | ………… | अङ्कनीभ्यः। |
| | 20. | लेखनी – | ………… | ………… | …………। |
| | 21. | घटी – | ………… | ………… | …………। |
| | 22. | सूची – | ………… | ………… | …………। |
| | 23. | गृहिणी – | ………… | ………… | …………। |
| | 24. | दर्वी – | ………… | ………… | …………। |

## सर्वनामशब्दानां चतुर्थीरूपाणि

**ध्यानेन पठन्तु–**

[ ध्यान से पढ़िए। Please read carefully. ]

| | | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|---|
| एतत् | पुं० | एतस्मै | एताभ्याम् | एतेभ्यः |
| | नपुं० | एतस्मै | एताभ्याम् | एतेभ्यः |
| | स्त्री० | एतस्यै | एताभ्याम् | एताभ्यः । |
| तत् | पुं० | तस्मै | ताभ्याम् | तेभ्यः । |
| | नपुं० | तस्मै | ताभ्याम् | तेभ्यः । |
| | स्त्री० | तस्यै | ताभ्याम् | ताभ्यः । |
| भवत् | पुं० | भवते | भवद्भ्याम् | भवद्भ्यः । |
| | नपुं० | भवते | भवद्भ्याम् | भवद्भ्यः । |
| | स्त्री० | भवत्यै | भवतीभ्याम् | भवतीभ्यः । |
| सर्व | पुं० | सर्वस्मै | सर्वाभ्याम् | सर्वेभ्यः । |
| | नपुं० | सर्वस्मै | सर्वाभ्याम् | सर्वेभ्यः । |
| | स्त्री० | सर्वस्यै | सर्वाभ्याम् | सर्वाभ्यः । |
| अस्मद् | पुं० | मह्यम् | आवाभ्याम् | अस्मभ्यम् । |
| | नपुं० | मह्यम् | आवाभ्याम् | अस्मभ्यम् । |
| | स्त्री० | मह्यम् | आवाभ्याम् | अस्मभ्यम् । |
| युष्मद् | पुं० | तुभ्यम् | युवाभ्याम् | युष्मभ्यम् । |
| | नपुं० | तुभ्यम् | युवाभ्याम् | युष्मभ्यम् । |
| | स्त्री० | तुभ्यम् | युवाभ्याम् | युष्मभ्यम् । |

## अभ्यासः – 193

**क्रियार्थायां क्रियायां चतुर्थी**

**उदाहरणानुगुणं रिक्तस्थानानि पूरयन्तु–**
[उदाहरण के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Fill in the blanks as shown in the example.]

बालकाः **किमर्थं** विद्यालयं गच्छन्ति ? .....अध्ययनाय.... (अध्ययनम्)

उदा०–1. छात्राः **किमर्थं** विद्यालयं गच्छन्ति ? छात्राः .अध्ययनाय..... विद्यालयं गच्छन्ति। (अध्ययनम्)

2. तरुणाः **किमर्थं** चित्रालयं गच्छन्ति ? ....... ........... ............. (चलचित्रदर्शनम्)

3. छात्राः **किमर्थं** पठन्ति ? ....... ........... ............. (ज्ञानार्जनम्)

4. जनाः **किमर्थं** वायुविहारं कुर्वन्ति ? ....... ........... ............. (स्वास्थ्यरक्षणम्)

5. जनाः **किमर्थं** भोजनं कुर्वन्ति ? ....... ........... ............. (जीवनम्)

6. बालः **किमर्थं** रोदनं करोति ? ....... ........... ............. (दुग्धपानम्)

7. पर्यटकाः **किमर्थम्** आगच्छन्ति ? ........... ........... ........... (भ्रमणम्)

8. बालकाः **किमर्थं** कोलाहलं कुर्वन्ति ? ....... ......... ......... ........ (गृहगमनम्)

9. जनाः **किमर्थं** तत्र समवेताः सन्ति ? ....... ...... ...... ...... .....(अवलोकनम्)

10. युवकः **किमर्थं** योगासनं करोति ? ....... ......... ......... ....... (आरोग्यवर्धनम्)

## अभ्यासः – 194

प्रश्नः– किमर्थम् ..... ?
उत्तरम्– .................

उदाहरणानुसारं रिक्तस्थानानि पूरयन्तु–

[उदाहरण के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Fill in the blanks as shown in the example.]

यथा-- 1. वयं **किमर्थं** विद्यालयं गच्छामः ?
वयम्... अध्ययनाय विद्यालयं.. गच्छामः.। (अध्ययनम्)

2. यूयं **किमर्थं** प्रयागं गच्छथ ?
........ ........ ........ ........। (गङ्गास्नानम्)

3. जनाः **किमर्थं** मुम्बईनगरीं गच्छन्ति ?
........ ........ ........ ........। (समुद्रदर्शनम्)

4. पाचकः **किमर्थं** पाकशालां गच्छति।
........ ........ ........ ........। (भोजननिर्माणम्)

5. वृक्षाः **किमर्थं** फलन्ति ?
........ ........ ........। (परोपकारः)

6. वयं **किमर्थं** प्रार्थनां कुर्मः ?
........ ........ ........ ........। (मानवकल्याणम्)

7. ते **किमर्थं** मन्दिरं गच्छन्ति ?
........ ........ ........ ........। (अर्चनम्)

8. त्वं **किमर्थं** विदेशं गच्छसि ?
........ ........ ........ ........। (अनुसन्धानम्)

9. भवत्यौ **किमर्थं** जलाशयं गच्छतः ?
........ ........ ........ ........। (नौकाविहारः)

10. भवत्यः **किमर्थं** भोजनालयं गच्छन्ति ?
........ ........ ........ ........। (भोजनम्)

## अभ्यासः – 195

**किमर्थम् / कस्मै**

✍ **उत्तराणि दृष्ट्वा उदाहरणानुगुणं प्रश्नान् लिखन्तु–**
[ उदाहरणों के अनुसार उत्तरों को देखकर प्रश्नों को लिखिए। Read the examples carefully and then frame questions to the given answers.]

उदा०– उ०– हरीशः **भोजनाय** गच्छति।
प्र०– .हरीशः. **किमर्थं** .गच्छति... ?

1. उ०– छात्रः **अध्ययनाय** वसति।
प्र०– ........ ........ .......... ?

उदा०– 2. उ०– नृपः **ग्रन्थकाराय** पुरस्कारं ददाति।
प्र०– ..नृपः... ..**कस्मै**. पुरस्कारं.. .ददाति... ?

3. उ०– धनिकः **भिक्षुकाय** धनं ददाति ?
प्र०– ........ ......... ........ .......... ?

4. उ०– वृद्धः प्रातः **भ्रमणाय** गच्छति।
प्र०– ........ ......... ......... .......... ?

5. उ०– क्रीडकः **क्रीडनाय** गच्छति।
प्र०– ........ ......... .......... ?

6. उ०– जनकः **देवाय** अर्घ्यम् अर्पयति।
प्र०– ........ ......... ......... .......... ?

7. उ०– यतिवरः **ध्यानाय** उपविशति।
प्र०– ........ ......... .......... ?

8. उ०– बालकः **पठनाय** आगच्छति।
प्र०– ........ ......... .......... ?

9. उ०– आञ्जनेयः **रामाय** चूडामणिं ददाति।
प्र०– ........ ......... ......... .......... ?

10. उ०– भक्तः **देवाय** निवेदयति।
प्र०– ........ ......... .......... ?

## अभ्यासः – 196

**दानार्थे चतुर्थी प्रयोगाः**

**उदाहरणानुसारं रिक्तस्थानानि पूरयन्तु–**

[उदाहरणों के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Fill in the blanks as shown in the examples.]

| कर्ता | क्रमः | रिक्तस्थानम् | शब्दः | कर्म | क्रिया |
|---|---|---|---|---|---|
| नृपः | 1. | ...भिक्षुकेभ्यः... | भिक्षुकाः | भिक्षां | यच्छति/ददाति |
| | 2. | ............ | निर्धनाः | धनं | |
| | 3. | ............ | अध्यापकाः | उपायनानि | |
| | 4. | ............ | बालकाः | मोदकानि | |
| | 5. | ............ | ब्राह्मणः | क्षेत्रं | |
| जननी | 6. | ....पुत्राय.... | पुत्रः | खाद्यं | यच्छति/ददाति |
| | 7. | ............ | कन्या | शाटिकां | |
| | 8. | ............ | रजकी | वस्त्रं | |
| | 9. | ............ | बालिका | फलं | |
| | 10. | ............ | बालिकाः | पुस्तकानि | |
| वृद्धा | 11. | ...प्रपौत्राय... | प्रपौत्रः | उपदेशं | यच्छति/ददाति |
| | 12. | ............ | विनम्राः | आशीर्वादं | |
| | 13. | ............ | आश्रिताः | रूप्यकाणि | |
| | 14. | ............ | दुर्जनः | अभिशापं | |
| | 15. | ............ | प्रपौत्री | मोदकानि | |

## अभ्यासः – 197

**दानार्थे चतुर्थी–प्रयोगाः**

**उदाहरणानुगुणं चतुर्थ्यन्तपदैः रिक्तस्थानानि पूरयन्तु–**

[उदाहरणों के अनुसार चतुर्थ्यन्त पदों से रिक्त स्थानों की पूर्ति कीजिए। Fill in the blanks with words ending in fourth (dative) case as shown in the examples.]

| | | | | | |
|---|---|---|---|---|---|
| उदा० – | 1. | भगिनी | ..अनुजाय.. | अनुजः | मोदकं यच्छति/ददाति। |
| | 2. | पुत्री | ...जनन्यै... | जननी | रोटिकां यच्छति/ददाति। |
| | 3. | शिक्षकाः | ............ | छात्राः | पुस्तकानि यच्छन्ति/ददति। |
| | 4. | त्वं | ............ | अहम् | अङ्कनीं यच्छसि/ददासि। |
| | 5. | युवां | ............ | भिक्षुकौ | नाणके यच्छथः/दत्थ। |
| | 6. | सः | ............ | भगिनी | उपायनं यच्छति/ददाति। |
| | 7. | भवान् | ............ | सौचिकः | वस्त्रं यच्छति/ददाति। |
| | 8. | भवती | ............ | सा | किं यच्छति/ददाति ? |
| | 9. | अहं | ............ | मित्रम् | घटीं यच्छामि/ददामि। |
| | 10. | नन्दिनी | ............ | त्वम् | सुधाखण्डं यच्छति/ददाति। |

## 4.4.2 रोचतेः प्रयोगे चतुर्थी

**'अ' भागस्य शब्देभ्यः समुचितविभक्तिप्रयोगेण 'आ' भागे वाक्यानि पूरयन्तु–**

[ 'अ' भाग के शब्दों से समुचित विभक्ति का प्रयोग करते हुए 'आ' भाग में वाक्यों को पूरा कीजिए। Complete the following sentences in part 'अ' joining the proper ending with words given in part 'आ' ]



मह्यं मोदकं रोचते।

| | (अ) | (आ) |
|---|---|---|
| उदा0– 1. | बालकः, मोदकम्। | 1. ...बालकाय... मोदकं रोचते। |
| 2. | श्रेष्ठः, आदरः। | 2. .............. ......... रोचते। |
| 3. | मित्रम्, स्नेहः। | 3. .............. ......... रोचते। |
| 4. | देवः, भक्तिः। | 4. .............. ......... रोचते। |
| 5. | मीनः, जलम्। | 5. .............. ......... रोचते। |
| 6. | सर्पः, पवनः। | 6. .............. ......... रोचते। |
| 7. | बालिका, पुष्पम्। | 7. .............. ......... रोचते। |
| 8. | यतिवरः, आश्रमः। | 8. .............. ......... रोचते। |
| 9. | अहम्, कदलीफलम्। | 9. .............. ......... रोचते। |
| 10. | वयम्, संस्कृतम्। | 10. .............. ......... रोचते। |

## अभ्यासः – 198

रोचतेः प्रयोगे चतुर्थी

**कस्मै रोचते, कस्मै न रोचते इति कोष्ठके निर्दिष्टम् अस्ति। तत्र चतुर्थीविभक्तिं संयोज्य वाक्यानि रचयन्तु–**

[ किसको क्या अच्छा लगता है और क्या नहीं ? यह कोष्ठ मे प्रदर्शित है। उस शब्द में चतुर्थी विभक्ति जोड़कर वाक्यों की रचना कीजिए। What is liked and what is not liked bywhom is shown in the brackets. Complete the sentences by adding fourth case-ending to them.]

उदा०– (बालकः) ...बालकाय... मधुरं रोचते।
(एषः) ...एतस्मै... अम्लं न रोचते।

1. (सः) .............. कलहः न रोचते।
2. (सीता) .............. पायसं रोचते।
3. (अहम्) .............. संस्कृतं रोचते।
4. (सा) .............. गणितं न रोचते।
5. (वयम्) .............. मधुरं रोचते।
6. (माला) .............. चित्रं रोचते।
7. (पण्डिताः) .............. वादः रोचते।
8. (मूर्खाः) .............. शास्त्रं न रोचते।
9. (अध्यापकः) .............. अध्यापनं रोचते।
10. (पुत्री) .............. गीतं रोचते।
11. (पुत्रः) .............. क्रीडा रोचते।
12. (जनकः) .............. चित्रं रोचते।
13. (जननी) .............. चित्रं न रोचते।
14. (एषा) .............. ओदनं रोचते।
15. (सा) .............. रोटिका न रोचते।
16. (पितामही) .............. पुराणं रोचते।
17. (पितामहः) .............. चलचित्रगानं न रोचते।
18. (छात्राः) .............. क्रीडा रोचते।
19. (मित्रम्) .............. कार्यं रोचते।
20. (अलसः) .............. कार्यं न रोचते।

## अभ्यासः – 199

**4.4.3 तादर्थ्ये चतुर्थी**

**उदाहरणानुगुणं रिक्तस्थानानि पूरयन्तु–**

[ उदाहरणों के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Fill in the blanks as shown in the examples.]

| कर्ता | क्रमः | रिक्तस्थानम् | | कर्म | क्रिया |
|---|---|---|---|---|---|
| जननी | 1. | ......मह्यं...... | अहम् | मिष्टान्नम् | आनयति |
| | 2. | ............ | त्वम् | फलम् | |
| | 3. | ............ | सा | शाटिकाम् | |
| | 4. | ............ | सः | लेखनीम् | |
| | 5. | ............ | एषः | अङ्कनीम् | |
| शिक्षकः | 6. | ....छात्रेभ्यः... | छात्राः | पुस्तकानि | आनयति |
| | 7. | ............ | छात्रा | अङ्कनीम् | |
| | 8. | ............ | चित्रकारः | पटम् | |
| | 9. | ............ | गवेषकाः | पठनसामग्रीम् | |
| | 10. | ............ | पुत्रः | मोदकम् | |
| एषा | 11. | ...शिक्षकाय... | शिक्षकः | सुधाखण्डम् | आनयति |
| | 12. | ............ | यूयम् | तक्रम् | |
| | 13. | ............ | आवाम् | उपाहारम् | |
| | 14. | ............ | एते | फलम् | |
| | 15. | ............ | वयम् | जलम् | |

**त्वम्** → ... ← **क्रीणासि**

| | | | |
|---|---|---|---|
| 16. | ....एताभ्यां.... | एतौ | वस्त्राणि |
| 17. | ............ | सः | फलं |
| 18. | ............ | ते | पुस्तकानि |
| 19. | ............ | एषा | मालां |
| 20. | ............ | तौ | लेखन्यौ |

**अहम्** → ... ← **क्रीणामि**

| | | | |
|---|---|---|---|
| 21. | ....तुभ्यं.... | त्वम् | कागदं |
| 22. | ............ | युवाम् | कर्कटीः |
| 23. | ............ | ताः | करवस्त्राणि |
| 24. | ............ | एताः | शाटिकाः |
| 25. | ............ | भवती | पुष्पं |

**जनकः** → ... ← **नयति**

| | | | |
|---|---|---|---|
| 26. | ............ | लता | मोदकं |
| 27. | ............ | सुदेशः | फलानि |
| 28. | ............ | ताः | शाटिकाः |
| 29. | ............ | जननी | आभूषणानि |
| 30. | ............ | अनुजौ | वस्त्राणि |

## अभ्यासः – 200

*4.4.4 क्रुध्–द्रुह्–असूया–ईर्ष्या–प्रयोगे चतुर्थी*

**उदाहरणानुगुणं रिक्तस्थानेषु चतुर्थ्यन्तरूपाणि लिखन्तु–**

[उदाहरणों के अनुसार रिक्तस्थानों में चतुर्थी विभक्ति के रूपों को लिखिए। Write down the forms of fourth case-ending in the given blanks.]

I ...कः... ....कस्मै...... ..क्रुध्यति ... ?

| | | | | |
|---|---|---|---|---|
| उदा०– 1. | रावणः | ...रामाय.... | रामः | क्रुध्यति |
| 2. | कंसः | ............. | कृष्णः | |
| 3. | दुर्योधनः | ............. | युधिष्ठिरः | |
| 4. | कर्णः | ............. | अर्जुनः | |
| 5. | दुर्जनः | ............. | सज्जनः | |

II ...कः... ....कस्मै...... ..ईर्ष्यति ... ?

| | | | | |
|---|---|---|---|---|
| उदा०– 6. | देवाः | ..राक्षसेभ्यः... | राक्षसाः | ईर्ष्यन्ति |
| 7. | राक्षसाः | ............. | देवाः | |
| 8. | कौरवाः | ............. | पाण्डवाः | |
| 9. | खलाः | ............. | सज्जनाः | |
| 10. | निर्धनाः | ............. | धनिकाः | |

III …कः… …कस्मै…… …द्रुह्यति…. ?

| | | | | |
|---|---|---|---|---|
| उदा०– 11. | ताडका | …रामाय…. | रामः | द्रुह्यति |
| 12. | पूतना | ………….. | कृष्णः | |
| 13. | तारकासुरः | ………….. | कुमारः | |
| 14. | महिषासुरः | ………….. | दुर्गा | |
| 15. | शुक्राचार्यः | ………….. | देवाः | |

IV कः……. कस्मै………….. असूयति………… ?

| | | | | |
|---|---|---|---|---|
| उदा०– 16. | चोरः | .सज्जनेभ्यः.. | सज्जनाः | असूयति |
| 17. | शूर्पणखा | ………….. | रामलक्ष्मणौ | |
| 18. | नकुलः | ………….. | सर्पाः | |
| 19. | महिला | ………….. | महिला | |
| 20. | भिक्षुकः | ………….. | धनिकाः | |

# पञ्चमः स्तबकः

## 5.1 प्रथमः पाठः

[ पञ्चमी ]

### 5.1.1 पञ्चमीप्रयोगाः

**ध्यानेन पठन्तु-**

[ ध्यान से पढ़िए। Please read carefully. ]



भटः



अश्वः



भटः अश्वात् पतति।



कृषकः



ग्रामः



कृषकः ग्रामात् आगच्छति।



महिला



पाकशाला



महिला पाकशालायाः आगच्छति।



मुनिवरः



नदी



मुनिवरः नद्याः आगच्छति।

## उदाहरणानुगुणं रिक्तस्थानानि पूरयन्तु–

[ उदाहरणों के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Please fill in the blanks as shown in the examples. ]



वृक्षः



आम्रम्



वृक्षात् आम्रं पतति।



बालकः



विद्यालयः



बालकः विद्यालयात् आगच्छति।

उदा०– 1. वृक्षः पत्रम् — 1. ..वृक्षात्.. पत्रं पतति।

2. हस्तः सुधाखण्डः — 2. ......... ................ ..पतति...।

3. अश्वः बालकः — 3. ......... ................ ..पतति...।

4. आकाशः जलम् — 4. ......... ................ ..पतति...।

उदा०– 5. अध्यापिका पुस्तकालयः — 5. अध्यापिका पुस्तकालयात् आगच्छति।

6. मित्रं ग्रामः — 6. ......... ................ आगच्छति..।

7. छात्रा प्रवासः — 7. ......... ................ आगच्छति...।

| | | | |
|---|---|---|---|
| 9. गवेषकः/विदेशः | 9. ......... | ................ | आगच्छति। |
| 10. गृहिणी/गृहम् | 10. ......... | ................ | आगच्छति। |
| 11. अर्चकः/मन्दिरम् | 11. ......... | ................ | आगच्छति। |
| 12. भगिनी/उद्यानम् | 12. ......... | ................ | आगच्छति। |
| 13. नारदः/कैलासः | 13. ......... | ................ | आगच्छति। |
| 14. मूषकः/बिलम् | 14. ......... | ................ | आगच्छति। |
| 15. वैद्यः/चिकित्सालयः | 15. ......... | ................ | आगच्छति। |

## अभ्यासः – 201

......... आगच्छति

**कः कस्मात् स्थानात् आगच्छति इति अग्रे कोष्ठके निर्दिष्टम् अस्ति। तत् पञ्चम्यन्ते परिवर्त्य रिक्तस्थानानि पूरयन्तु–**

[ कौन कहाँ से आ रहा है यह कोष्ठ में निर्दिष्ट है, इसे पञ्चम्यन्त में परिवर्तित कर रिक्त स्थानों की पूर्ति कीजिए। 'Who is coming from where' is indicated below. Please fill in the blanks by adding fifth case ending to the words. ]

| | | | | |
|---|---|---|---|---|
| यथा– | जनकः | कार्यालयात् | आगच्छति। | (कार्यालयः) |
| 1. | मित्रं | ..गृहात्.... | आगच्छति। | (गृहम्) |
| 2. | बालकः | ............ | आगच्छति। | (विद्यालयः) |
| 3. | एषः | ............ | आगच्छति। | (नगरम्) |
| 4. | सा | ............ | आगच्छति। | (ग्रामः) |
| 5. | रमा | ............ | आगच्छति। | (मन्दिरम्) |
| 6. | लता | ............ | आगच्छति। | (श्वशुरगृहम्) |
| 7. | अध्यापिका | ............ | आगच्छति। | (बैंगलूरनगरम्) |
| 8. | छात्रा | ............ | आगच्छति। | (हिमाचलः) |
| 9. | अर्चकः | ............ | आगच्छति। | (मनसादेवीमन्दिरम्) |
| 10. | आरक्षकः | ............ | आगच्छति। | (आरक्षककार्यालयः) |
| 11. | छात्रनायकः | ............ | आगच्छति। | (विश्वविद्यालयः) |
| 12. | वित्तकोषाध्यक्षः | ............ | आगच्छति। | (जापानदेशः) |
| 13. | मन्त्रिमहोदयः | ............ | आगच्छति। | (विदेशः) |
| 14. | धावकः | ............ | आगच्छति। | (आस्ट्रेलियादेशः) |
| 15. | अनुजः | ............ | आगच्छति। | (चैन्नैनगरम्) |
| 16. | जननी | ............ | आगच्छति। | (मातुलगृहम्) |

# अभ्यासः – 202

**पञ्चम्यां रूपाणि**

**पञ्चम्यन्तपदैः रिक्तस्थानानि पूरयन्तु–**
[ पञ्चम्यन्त पदों से रिक्त स्थानों की पूर्ति कीजिए। Please fill in the blanks with words in fifth case-ending.]

| | | | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|---|---|
| अ०पुं०– | 1. वृक्षः | → | वृक्षात् | वृक्षाभ्याम् | वृक्षेभ्यः |
| | 2. दण्डः | → | ............... | ............... | ............... |
| | 3. दीपः | → | ............... | ............... | ............... |
| | 4. सर्पः | → | ............... | ............... | ............... |
| | 5. नृपः | → | ............... | ............... | ............... |
| | 6. सुधाखण्डः | → | ............... | ............... | ............... |
| अ०नपुं०– | 7. फलम् | → | फलात् | फलाभ्याम् | फलेभ्यः |
| | 8. पुस्तकम् | → | ............... | ............... | ............... |
| | 9. पत्रम् | → | ............... | ............... | ............... |
| | 10. पुष्पम् | → | ............... | ............... | ............... |
| | 11. सोपानम् | → | ............... | ............... | ............... |
| | 12. नाणकम् | → | ............... | ............... | ............... |
| आ०स्त्री०– | 13. बालिका | → | बालिकायाः | बालिकाभ्याम् | बालिकाभ्यः |
| | 14. लता | → | ............... | ............... | ............... |
| | 15. दोला | → | ............... | ............... | ............... |
| | 16. माला | → | ............... | ............... | ............... |
| | 17. सन्दंशिका | → | ............... | ............... | ............... |
| | 18. कन्या | → | ............... | ............... | ............... |
| ई०स्त्री०– | 19. सूची | → | सूच्याः | सूचीभ्याम् | सूचीभ्यः |
| | 20. घटी | → | ............... | ............... | ............... |
| | 21. गृहिणी | → | ............... | ............... | ............... |
| | 22. नर्तकी | → | ............... | ............... | ............... |
| | 23. चालनी | → | ............... | ............... | ............... |

## सर्वनामशब्दानां पञ्चम्यां रूपाणि

**ध्यानेन पठन्तु—**

[ ध्यान से पढ़िए। Please read carefully. ]

| | | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|---|
| एतत् | पुं० | एतस्मात् | एताभ्याम् | एतेभ्यः |
| | नपुं० | एतस्मात् | एताभ्याम् | एतेभ्यः |
| | स्त्री० | एतस्याः | एताभ्याम् | एताभ्यः |
| तत् | पुं० | तस्मात् | ताभ्याम् | तेभ्यः |
| | नपुं० | तस्मात् | ताभ्याम् | तेभ्यः |
| | स्त्री० | तस्याः | ताभ्याम् | ताभ्यः |
| भवत् | पुं० | भवतः | भवद्भ्याम् | भवद्भ्यः |
| | नपुं० | भवतः | भवद्भ्याम् | भवद्भ्यः |
| | स्त्री० | भवत्याः | भवतीभ्याम् | भवतीभ्यः |
| सर्व | पुं० | सर्वस्मात् | सर्वाभ्याम् | सर्वेभ्यः |
| | नपुं० | सर्वस्मात् | सर्वाभ्याम् | सर्वेभ्यः |
| | स्त्री० | सर्वस्याः | सर्वाभ्याम् | सर्वाभ्यः |
| अस्मद् | पुं० | मत् | आवाभ्याम् | अस्मत् |
| | नपुं० | मत् | आवाभ्याम् | अस्मत् |
| | स्त्री० | मत् | आवाभ्याम् | अस्मत् |
| युष्मद् | पुं० | त्वत् | युवाभ्याम् | युष्मत् |
| | नपुं० | त्वत् | युवाभ्याम् | युष्मत् |
| | स्त्री० | त्वत् | युवाभ्याम् | युष्मत् |

# अभ्यासः – 203

**पञ्चम्यां रूपाणि**

**अधोनिर्दिष्टानां पञ्चम्यन्तरूपाणि लिखन्तु–**

[ अधोलिखित शब्दों के पञ्चम्यन्त रूपों को लिखिए। Please write the fifth case ending forms of the following words. ]

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| उदा० – | वृक्षः | – | ...वृक्षात्.... | | सर्वः | – | ....सर्वस्मात्. |
| 1. | एषः | – | .............. | 21. | भवन्तौ | – | ............. |
| 2. | नन्दिनी | – | .............. | 22. | नदी | – | ............. |
| 3. | वयम् | – | .............. | 23. | फलम् | – | ............. |
| 4. | सा | – | .............. | 24. | आवाम् | – | ............. |
| 5. | अध्यापकः | – | .............. | 25. | भवत्यः | – | ............. |
| 6. | भवती | – | .............. | 26. | यानानि | – | ............. |
| 7. | जननी | – | .............. | 27. | ताः | – | ............. |
| 8. | तौ | – | .............. | 28. | गृहिण्यः | – | ............. |
| 9. | सर्वा | – | .............. | 29. | देवी | – | ............. |
| 10. | एते (पुं०) | – | .............. | 30. | भवन्तः | – | ............. |
| 11. | अहम् | – | .............. | 31. | आसन्दौ | – | ............. |
| 12. | भवत्यौ | – | .............. | 32. | भवने | – | ............. |
| 13. | वैद्यः | – | .............. | 33. | शकटौ | – | ............. |
| 14. | भवान् | – | .............. | 34. | लेखन्यः | – | ............. |
| 15. | त्वम् | – | .............. | 35. | एतौ | – | ............. |
| 16. | सः | – | .............. | 36. | दीपाः | – | ............. |
| 17. | शाटिका | – | .............. | 37. | व्यजनम् | – | ............. |
| 18. | यूयम् | – | .............. | 38. | सस्यानि | – | ............. |
| 19. | काशी | – | .............. | 39. | तीरम् | – | ............. |
| 20. | युवाम् | – | .............. | 40. | कूपी | – | ............. |

# अभ्यासः – 204

**पञ्चम्यन्तानां वाक्ये प्रयोगाः**

**मञ्जूषायां प्रदत्तयोः शब्दयोः उचितेन शब्देन सह पञ्चमीं योजयित्वा वाक्यानि लिखन्तु –**
[मंजूषा में प्रदत्त शब्दों में से उचित शब्द के साथ पञ्चमी विभक्ति जोड़कर वाक्य पूर्ण कीजिए। Complete the following sentences by adding fifth case ending to the selected word given in the box.]

| | मञ्जूषा | | वाक्यानि |
|---|---|---|---|
| उदा० – | 1. ...वृक्षः... | पत्रम्। | .वृक्षात्... पत्रं पतति। |
| | 2. अश्वः | भटः। | ........... ............ पतति। |
| | 3. लता | पुष्पम्। | ......... ............ ..........। |
| | 4. हिमालयः | गङ्गा। | ......... ............ प्रवहति। |
| | 5. पर्वतः | नदी। | ......... ............ ..........। |
| | 6. महानदी | शाखानदी | ......... ............ ..........। |
| उदा० – | 7. गृहिणी | नदी। | गृहिणी ...नद्याः... जलम् आनयति। |
| | 8. बालिका | कूपः। | बालिका .......... जलम् आनयति। |
| | 9. बालकः | आपणः। | ........ .......... तण्डुलम् आनयति। |
| | 10. वानरः | शाखा। | वानरः .......... पतति। |
| | 11. बालकः | सोपानम्। | ........ ............ ..........। |
| | 12. मण्डूकः | कूलम्। | ......... ............ जले ..........। |
| | 13. महिला | कूपः। | ........ .......... जलम् आकर्षति। |
| | 14. पुरुषः | जलाशयः। | ......... .......... पङ्कम् उद्धरति। |
| | 15. अग्निशमकः | भवनम्। | ......... .......... जनान् बहिः निष्कासयति। |
| | 16. चोरः | कारागारम्। | ......... ............ निर्गच्छति। |
| | 17. जलं | मेघः। | ......... ............ ..........। |
| | 18. धूमः | अनलः। | ......... ............ ..........। |

## अभ्यासः – 205

**पञ्चम्याः केचन अन्ये प्रयोगाः**

**प्रदत्तक्रियापदं संयोज्य उदाहरणानुगुणं वाक्यानि रचयन्तु–**
[ उदाहरणों के अनुसार दी गई क्रिया को जोड़ते हुए वाक्यों की रचना कीजिए। Please make sentences as shown in the examples by using the given verb.]

**पठति**

उदा० – 1. छात्रः अध्यापकः छात्रः अध्यापकात् पठति।
2. रामः वसिष्ठः ........... ............ ..........।
3. राक्षसाः शुक्राचार्यः ............ ............ पठन्ति।
4. छात्राः अध्यापिकाः ............ ............ ..........।
5. पुत्री जनकः ............ ............ पठति।

**बिभेति**

उदा० – 6. हरिणः व्याघ्रः हरिणः व्याघ्रात् बिभेति।
7. मीनः मकरः ......... ............ ..........।
8. मूषकः बिडालः ......... ............ ..........।
9. सर्पः नकुलः ......... ............ ..........।
10. बालकः भल्लूकः ......... ............ ..........।

**रक्षति**

उदा० – 11. जननी सर्पः जननी सर्पात् पुत्रीं रक्षति।
12. देवः राक्षसाः ....... .......... मनुष्यान् .........।
13. अध्यापकः कुक्कुरः ....... .......... छात्रं .........।
14. नृपः लुण्ठाकाः ....... .......... प्रजाः .........।
15. बालिका जलं ....... .......... पुस्तकं .........।

## अभ्यासः – 206

**पञ्चम्यन्तानां मिश्रिताः प्रयोगाः**

**यथोदाहरणं रिक्तस्थानानि पूरयन्तु–**
[ उदाहरणों के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Please fill in the blanks as shown in the examples. ]

I. कुतः आगच्छति ?

**छात्रः** → **आगच्छति**

1. (गृहम्) ....गृहात्....
2. (कार्यालयः) .............
3. (विद्यालयः) .............
4. (देवालयः) .............
5. (आपणः) .............

II. कस्मात् बिभेति ?

**मूषकः** → **बिभेति**

6. (बिडालः) ..बिडालात्..
7. (काकः) .............
8. (कुक्कुरः) .............

**सज्जनाः** → **बिभ्यति**

9. (दुर्जनाः) .............
10. (असत्यम्) .............
11. (अधर्मः) .............

**शिशुः** → **बिभेति**

12. (काकः) .............
13. (अहम्) .............
14. (यूयम्) .............

III. कस्मात् रक्षति ?

युतकम्
15. (शीतम्) .............. रक्षति
16. (आतपः) ..............

छत्रम्
17. (आतपः) .............. रक्षति
18. (वर्षणम्) ..............

**सम्यक् स्मरन्तु–**

[ स्मरण कीजिए। Learn carefully. ]

**भी भये**

| | | |
|---|---|---|
| बिभेति | बिभितः/बिभीतः | बिभ्यति |
| बिभेषि | बिभिथः/बिभीथः | बिभिथ/बिभीथ |
| बिभेमि | बिभिवः/बिभीवः | बिभिमः/बिभीमः |

## अभ्यासः – 207

**पञ्चम्यन्तानां प्रयोगाः**

**पञ्चम्यन्तपदैः रिक्तस्थानानि पूरयन्तु—**

[ पञ्चम्यन्त पदों से रिक्त स्थानों की पूर्ति कीजिए। Please fill in the blanks with words in fifth case ending. ]

| | | | | |
|---|---|---|---|---|
| उदा० – 1. | पत्रं | वृक्षात्......... | पतति। | (वृक्षः) |
| 2. | बालकः | ................ | आगच्छति। | (गृहम्) |
| 3. | छात्रः | ................ | आगच्छति। | (गुरुकुलम्) |
| 4. | तौ | ................ | पततः। | (अश्वः) |
| 5. | युतकं | ................ | रक्षति। | (शीतम्) |
| 6. | अहम् | ................ | आगच्छामि। | (आपणः) |
| 7. | भवती | ................ | बिभेति ? | (किम्) |
| 8. | यूयं | ................ | आगच्छथ। | (ग्रामः) |
| 9. | आवां | ................ | आगच्छावः। | (मन्दिरम्) |
| 10. | भवन्तौ | ................ | पठतः। | (शिक्षकः) |
| 11. | भवत्यः | ................ | पठन्ति। | (शिक्षिका) |
| 12. | त्वं | ................ | शृणोषि ? | (किम्) |
| 13. | सः | ................ | रक्षति। | (व्याघ्रः) |
| 14. | एते | ................ | पश्यन्ति। | (भवनम्) |
| 15. | एषा | ................ | जलम् आनयति। | (कूपः) |
| 16. | दर्शकाः | ................ | निर्गच्छन्ति। | (चलचित्रमन्दिरम्) |
| 17. | जनकः | ................ | रक्षति। | (जलम्) |
| 18. | गृहिणी | ................ | बिभेति। | (सर्पः) |
| 19. | पितृव्यः | ................ | रक्षति। | (अनलः) |
| 20. | पितामहः | ................ | आगच्छति। | (मन्दिरम्) |

# अभ्यासः – 208

**पञ्चम्यन्तानां प्रयोगाः**

**बहुवचनान्तपञ्चम्यन्तपदैः उदाहरणानुगुणं रिक्तस्थानानि पूरयन्तु–**
[ पञ्चमी बहुवचन का प्रयोग करते हुए उदाहरण के अनुसार रिक्त स्थानों की पूर्ति कीजिए।
Please fill in the blanks by changing words into fifth case ending plural number as per the example. ]

| | | |
|---|---|---|
| उदा० – | ते आपणेभ्यः वस्तूनि आनयन्ति। | (आपणाः) |
| 1. | छात्राः .............. पाठं पठन्ति। | (अध्यापिकाः) |
| 2. | वयं .............. विचारान् ज्ञास्यामः। | (शिक्षकाः) |
| 3. | भिक्षुकः .............. अन्नं स्वीकरोति। | (गृहिण्यः) |
| 4. | राजकीयनायकाः .............. उत्कोचं स्वीकुर्वन्ति। | (सर्वे) |
| 5. | ताः .............. वस्त्राणि आनयन्ति। | (नगर्यः) |
| 6. | वयं .............. पुष्पाणि आनेष्यामः। | (वाटिकाः) |
| 7. | ते .............. धनं न स्वीकुर्वन्ति। | (वयम्) |
| 8. | .............. फलानि पतन्ति। | (वृक्षाः) |
| 9. | भगिनी .............. टिप्पणीं स्वीकरोति। | (ते) |
| 10. | सः .............. चाकलेहं स्वीकरोति। | (ताः) |
| 11. | वाहनानि .............. आगच्छन्ति। | (नगराणि) |
| 12. | राज्याभिषेकसमये .............. जलम् आनयन्ति। | (नद्यः) |
| 13. | भवती .............. धान्यम् आनयतु। | (सस्यानि) |
| 14. | भवान् .............. जलम् आनयतु। | (तीर्थक्षेत्राणि) |
| 15. | कार्यक्रमार्थं .............. जनाः आगताः। | (विभिन्नदेशाः) |
| 16. | अनेके इतिहासकाराः .............. भारतम् आगताः। | (विभिन्नदेशाः) |
| 17. | पुष्पाणि .............. पतन्ति। | (लताः) |
| 18. | सन्त्रस्तानां कृते .............. वस्तूनि सङ्गृहीतानि। | (विभिन्नगृहाणि) |
| 19. | घण्टानादानन्तरं छात्राः .............. गृहं गच्छन्ति। | (शालाः) |
| 20. | सः .............. ऋणं स्वीकरोति। | (सर्वे) |

## अभ्यासः – 209

**सर्वनामशब्दानां पञ्चम्यां प्रयोगाः**

**उदाहरणानुगुणं रिक्तस्थानानि पूरयन्तु–**

[ उदाहरण के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Please fill in the blanks as shown in the example.]

उदा० – 1. रमा ....तस्मात्... फलं स्वीकरोति। (तत्)
2. वयं .............. फलानि स्वीकुर्मः। (ताः)
3. मालिनी .............. धनं स्वीकरोति। (वयम्)
4. सः .............. ऋणं स्वीकरोति। (सर्वे)
5. छात्रः .............. पुष्पं स्वीकरोति। (अहम्)
6. रमेशः .............. धान्यं स्वीकरोति। (एषः)
7. भगिनी .............. शाटिकां स्वीकरोति। (सा)
8. अग्रजः .............. सूचीं स्वीकरोति। (तौ)
9. सा .............. संस्कृतं ज्ञास्यति। (अहम्)
10. छात्राः .............. शिष्टाचारं ज्ञास्यन्ति। (वयम्)
11. पुरुषाः .............. वाहनचालनं ज्ञास्यन्ति। (ते-स्त्री०)
12. जनाः .............. वस्तूनि सङ्गृह्णन्ति। (ते-पु०)
13. अहं .............. लेखनीं स्वीकरोमि। (त्वम्)
14. वयं .............. कवितां स्वीकुर्मः। (भवत्यः)
15. वैद्याः .............. धनं स्वीकुर्वन्ति। (भवन्तः)
16. भ्रष्टाः .............. उत्कोचं स्वीकुर्वन्ति। (ते-स्त्री०)
17. अहं .............. विषयसङ्ग्रहणं करोमि। (ताः)
18. पण्डिताः .............. सूचनाः स्वीकुर्वन्ति। (वयम्)
19. निर्धनाः .............. मिष्टान्नं स्वीकुर्वन्ति। (भवत्यौ)
20. भिक्षुकाः .............. रोटिकाः स्वीकुर्वन्ति। (आवाम्)

## अभ्यासः – 210

**बहिः, आरभ्य, पूर्वम्, परम् इति एतेषां शब्दानां प्रयोगे पञ्चम्याः प्रयोगाः**

**उदाहरणानुगुणं वाक्यानि रचयन्तु–**

[ उदाहरणों के अनुसार वाक्यों की रचना कीजिए। Please make sentences as shown in the examples. ]

I. बहिः–

1. ....ग्रामात्.... बहिः विद्यालयः अस्ति। (ग्रामः)
2. ............... बहिः मन्दिरम् अस्ति। (नगरम्)
3. .............. ............ वृक्षः ............। (क्षेत्रम्)
4. .............. ............. अजा चरति। (गृहम्)
5. .............. ............ वृषभः निद्राति। (मन्दिरम्)

II. आरभ्य–

6. ....सोमवासरात्... आरभ्य कक्ष्या भविष्यति। (सोमवासरः)
7. .............. ............ नगरसीमा अस्ति। (नदी)
8. .............. ............ गृहं यावत् उद्यानं निर्मातु। (मार्गः)
9. .............. ............ कन्याकुमारीं यावत् भारतदेशः। (हिमालयः)
10. .............. ............ शयनं यावत् कार्यं करोतु। (उत्थानम्)

III. पूर्वम्–

11. ....नगरात्... पूर्वं ग्रामः अस्ति। (नगरम्)
12. .............. ............ शनिवासरः। (रविवासरः)
13. .............. ............ मां पश्य। (गमनम्)
14. .............. ............ शान्तिमन्त्रं वदामः। (भोजनम्)
15. .............. ............ देवं स्मरामः। (शयनम्)

IV. परम्–

16. ....मासात्.... परं परीक्षा अस्ति। (मासः)
17. .............. ............ सोमवासरः भवति। (रविवासरः)
18. .............. ............ जलं न पिबत। (भोजनम्)
19. .............. ............ किञ्चित् क्रीडत। (पठनम्)
20. .............. ............ मां मिलतु। (आगमनम्)

## अभ्यासः – 211

**पञ्चम्यन्तानां प्रयोगाः**

**उदाहरणानुगुणं पञ्चम्यन्तपदैः रिक्तस्थानानि पूरयन्तु–**

[ उदाहरण के अनुसार पञ्चम्यन्त शब्दों से रिक्त स्थानों की पूर्ति कीजिए। Please fill in the blanks with words in fifth case ending as shown in the example. ]

उदा० – 1. देवदत्तः अध्यापकात् बिभेति। (अध्यापकः)
2. सेवकः .............. बहिः तिष्ठति। (गृहम्)
3. बालिका .............. पूर्वं देवं नमस्करोति। (शयनम्)
4. सः .............. आरभ्य विद्यालयं गमिष्यति। (शुक्रवासरः)
5. गृहिणी .............. लज्जाम् अनुभवति। (श्वशुरः)
6. इदानीं .............. पत्राणि पतन्ति। (लता)
7. ग्रामीणाः .............. पथिकं रक्षन्ति। (लुण्ठाकाः)
8. छात्रः .............. पुस्तकं पठति। (शिक्षिका)
9. सः .............. परं विदेशं गमिष्यति। (वर्षम्)
10. नदी .............. प्रवहति। (पर्वतः)
11. मण्डूकाः .............. जले पतन्ति। (कूलम्)
12. मालाकारः .............. पुष्पं चिनोति। (लता)
13. धीवरः .............. मत्स्यान् गृह्णाति। (तडागः)
14. शिशुः .............. पतति। (दोला)
15. बालकः .............. पतति। (द्विचक्रिका)
16. नारिकेलतैलं .............. निस्सरति। (कूपी)
17. वीरः .............. बाणं प्रक्षिपति। (कार्मुकः)
18. योगी .............. विरमति। (शयनम्)
19. अङ्गुलीयकम् .............. पतति। (अङ्गुली)
20. अजगरः .............. निर्गच्छति। (बिलम्)

5.1.2 तः

I.

| विद्यालयात् | विद्यालयतः |
|---|---|

विद्यालयात् = विद्यालयतः। एतयोः अर्थभेदः नास्ति।

II.

| | पञ्चम्याम् | | तः-प्रत्यये |
|---|---|---|---|
| पुं० | विद्यालयात् | = | विद्यालयतः |
| स्त्री० | मालायाः | = | मालातः |
| नपुं० | पुस्तकात् | = | पुस्तकतः |

III.

(क) विद्यालयात् → विद्यालयतः; विद्यालयाभ्याम् → विद्यालयतः; विद्यालयेभ्यः → विद्यालयतः

(ख) पाठशालायाः → पाठशालातः; पाठशालाभ्याम् → पाठशालातः; पाठशालाभ्यः → पाठशालातः

(ग) गृहात् → गृहतः; गृहभ्याम् → गृहतः; गहेभ्यः → गृहतः

IV.

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| पुं० | आत् | आभ्याम् | एभ्यः |
| स्त्री० | याः | आभ्याम् | आभ्यः |
| नपुं० | आत् | आभ्याम् | एभ्यः |

= तः

## अभ्यासः – 212

**पञ्चम्यन्तानां तः–प्रत्ययान्तेषु परिवर्त्तनम्**

**उदाहरणानुगुणं परिवर्तयन्तु–**

[ उदाहरणों के अनुसार परिवर्तन कीजिए। Please change according to the exmaples. ]

उदा0– 1. सः विद्यालयात् आगच्छति। सः विद्यालयतः आगच्छति।
2. वयं **ग्रामात्** आगच्छामः। वयं ............ ............।
3. एतौ **आपणात्** आगच्छतः। एतौ ............ ............।
4. नृपः **प्रासादात्** आगच्छति। नृपः ............ ............।
5. यूयं **पर्वतात्** आगच्छथ। यूयं ............ ............।

उदा0– 1. बालिकाः ..वाटिकायाः.. आगच्छन्ति। बालिकाः ..वाटिकातः.. आगच्छन्ति।
2. छात्रा **शिक्षिकायाः** टिप्पणीं स्वीकरोति। छात्रा .......... .......... ..........।
3. विद्यार्थिनी **पाठशालायाः** आगच्छति। ............ ............ ............।
4. **नलिकायाः** जलं स्रवति। ........... ............ ............।
5. पश्य, **गुहायाः** व्याघ्राः निर्गच्छन्ति। .......... ........... ......... .......।

उदा0– 1. धनिकाः ..नगर्याः.. आगच्छन्ति। धनिकाः ..नगरीतः.. आगच्छन्ति।
2. राजधानीयानं **राजधान्याः** आगच्छति। ......... .......... ............।
3. बालिका **पुष्पाधान्याः** पुष्पं निस्सारयति। ......... ........ ......... .........।
4. जननी **मालाकार्याः** पुष्पं क्रीणाति। .......... ........ ......... ...........।
5. सेविका **राज्ञ्याः** उपायनं गृह्णाति। .......... .......... ......... ............।

उदा0– 1. देवदत्तः ..नगरात्.. आगमिष्यति। देवदत्तः ..नगरतः.. आगमिष्यति।
2. अर्चकः **मन्दिरात्** आगच्छति। .......... .......... ............।
3. धनिकः **भवनात्** पश्यति। .......... .......... ............।
4. चालकः **यानात्** पतति। .......... .......... ............।
5. कृषिकः **क्षेत्रात्** आगच्छति। .......... .......... ............।

# पञ्चमः स्तबकः

## 5.2 द्वितीयः पाठः

## [ षष्ठी ]

**ध्यानेन पठन्तु-**

**5.2.1 षष्ठीप्रयोगाः**

[ ध्यान से पढ़िए। Please read carefully. ]



सीता



रामः



सीता रामस्य पत्नी।



गणेशः



शिवः



गणेशः शिवस्य पुत्रः।



कृष्णः



रुक्मिणी



कृष्णः रुक्मिण्याः पतिः।



जवाहरलालः



इन्दिरा



जवाहरलालः इन्दिरायाः जनकः।

# अभ्यासः – 213

✍ उदाहरणानुगुणं वाक्यानि लिखन्तु–

[ उदाहरणों के अनुसार वाक्यों को लिखिए। Please make sentences as shown in the examples. ]

| | |
|---|---|
| उदा० – 1. लक्ष्मणः **रामः** अनुजः। | 1. लक्ष्मणः ..रामस्य.... अनुजः। |
| 2. कृष्णः **वसुदेवः** पुत्रः। | 2. कृष्णः वसुदेवस्य पुत्रः। |
| 3. देवकी **कृष्णः** जननी। | 3. .......... .......... ..........। |
| 4. रामः **भरतः** अग्रजः। | 4. .......... .......... ..........। |
| 5. धृतराष्ट्रः **दुर्योधनः** जनकः। | 5. .......... .......... ..........। |
| उदा० – 6. रामः **अयोध्या** नृपः। | 6. रामः अयोध्यायाः नृपः। |
| 7. लक्ष्मणः **सुमित्रा** पुत्रः। | 7. .......... .......... ..........। |
| 8. रावणः **शूर्पणखा** अग्रजः। | 8. .......... .......... ..........। |
| 9. सुमित्रा **कौसल्या** भगिनी। | 9. .......... .......... ..........। |
| 10. जवाहरः **इन्दिरा** जनकः। | 10. जवाहरः ............ जनकः। |
| 11. शिवः **पार्वती** पतिः। | 11. शिवः ...पार्वत्याः.. पतिः। |
| 12. एषा **सौदामिनी** लेखनी। | 12. .......... .......... ..........। |
| 13. एतत् **राज्ञी** भवनम्। | 13. .......... .......... ..........। |
| 14. कंसः **देवकी** सहोदरः। | 14. .......... .......... ..........। |
| उदा० – 15. हस्तः **शरीरम्** अङ्गम्। | 15. हस्तः ...शरीरस्य.. अङ्गम्। |
| 16. एतत् **गृहं** द्वारम्। | 16. .......... .......... ..........। |
| 17. सः **नगरं** मुख्यः। | 17. .......... .......... ..........। |
| 18. तत् **दाडिमफलं** बीजम्। | 18. .......... .......... ..........। |
| 19. एतानि **यानं** चक्राणि। | 19. .......... .......... ..........। |

# अभ्यासः – 214

**षष्ठ्यन्तरूपाणि**

✍ **उदाहरणानुगुणं रूपाणि लिखन्तु–**

[ उदाहरणों के अनुसार रूपों को लिखिए। Please write forms (Rupas) of sixth case ending as per the examples. ]

| | | | | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|---|---|---|
| अ० पुं० उदा०– | 1. | वृक्षः | → | वृक्षस्य | वृक्षयोः | वृक्षाणाम् |
| | 2. | गायकः | → | ............ | ............ | गायकानाम्... |
| | 3. | रक्षकः | → | ............ | ............ | रक्षकाणाम्... |
| | 4. | सैनिकः | → | ............ | ............ | सैनिकानाम्.. |
| | 5. | दण्डः | → | ............ | ............ | दण्डानाम्.... |
| अ० नपुं० उदा०– | 6. | पुस्तकम् | → | पुस्तकस्य | पुस्तकयोः | पुस्तकानाम् |
| | 7. | पत्रम् | → | ............ | ............ | पत्राणाम्.... |
| | 8. | क्रीडनकम् | → | ............ | ............ | क्रीडनकानाम्. |
| | 9. | सूत्रम् | → | ............ | ............ | सूत्राणाम्.... |
| | 10. | पुष्पम् | → | ............ | ............ | पुष्पाणाम्.... |
| आ० स्त्री० उदा०– | 11. | शाखा | → | शाखायाः | शाखयोः | शाखानाम् |
| | 12. | लता | → | ............ | ............ | ............ |
| | 13. | गायिका | → | ............ | ............ | ............ |
| | 14. | माला | → | ............ | ............ | ............ |
| | 15. | अध्यापिका | → | ............ | ............ | ............ |
| ई० स्त्री० उदा०– | 16. | नर्तकी | → | नर्तक्याः | नर्तक्योः | नर्तकीनाम् |
| | 17. | सूची | → | ............ | ............ | ............ |
| | 18. | राज्ञी | → | ............ | ............ | राज्ञीनाम्.... |
| | 19. | जननी | → | ............ | ............ | जननीनाम्... |
| | 20. | भगिनी | → | ............ | ............ | ............ |

## सर्वनामशब्दानां षष्ठ्यन्तरूपाणि

**ध्यानेन पठन्तु–**

[ ध्यान से पढ़िए। Please read carefully. ]

| सर्वनाम | | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|---|
| एतत् | पुं० | एतस्य | एतयोः | एतेषाम् |
| | नपुं० | एतस्य | एतयोः | एतेषाम् |
| | स्त्री० | एतस्याः | एतयोः | एतासाम् |
| तत् | पुं० | तस्य | तयोः | तेषाम् |
| | नपुं० | तस्य | तयोः | तेषाम् |
| | स्त्री० | तस्याः | तयोः | तासाम् |
| भवत् | पुं० | भवतः | भवतोः | भवताम् |
| | नपुं० | भवतः | भवतोः | भवताम् |
| | स्त्री० | भवत्याः | भवत्योः | भवतीनाम् |
| सर्व | पुं० | सर्वस्य | सर्वयोः | सर्वेषाम् |
| | नपुं० | सर्वस्य | सर्वयोः | सर्वेषाम् |
| | स्त्री० | सर्वस्याः | सर्वयोः | सर्वासाम् |
| युष्मद् | पुं० | तव | युवयोः | युष्माकम् |
| | नपुं० | तव | युवयोः | युष्माकम् |
| | स्त्री० | तव | युवयोः | युष्माकम् |
| अस्मद् | पुं० | मम | आवयोः | अस्माकम् |
| | नपुं० | मम | आवयोः | अस्माकम् |
| | स्त्री० | मम | आवयोः | अस्माकम् |

## अभ्यासः – 215

**षष्ठ्यन्तानां प्रयोगाः**

**उदाहरणानुगुणं षष्ठ्यन्तरूपाणि लिखन्तु–**

[ उदाहरण के अनुसार षष्ठ्यन्त रूपों को लिखिए। Please write the forms in sixth case ending as shown in the example. ]

उदा०– 1. विश्वामित्रः ..विश्वामित्रस्य..

2. दशरथः ....................

3. लक्ष्मणः ....................

4. भरतः ....................

5. कौसल्या ....................

6. कैकेयी ....................

7. सीता ....................

8. अयोध्या ....................

9. ताडका ....................

10. सुमित्रा ....................



## अभ्यासः – 216

सम्बन्धवाचकानां प्रयोगाः

✍ **उदाहरणानुगुणं वाक्यानि रचयन्तु–**

[ उदाहरण के अनुसार वाक्यों की रचना कीजिए। Please make sentences as shown in the example. ]

| | | | |
|---|---|---|---|
| उदा०–1. स्नुषा | = पुत्रस्य पत्नी | दशरथः – स्नुषा सीता | दशरथस्य स्नुषा सीता। |
| 2. श्वशुरः | = पत्युः पिता | सीता – श्वशुरः दशरथः | ........ ....... .......। |
| 3. श्वशुरः | = पत्न्याः पिता | रामः – श्वशुरः जनकः | ........ ....... .......। |
| 4. जामाता | = पुत्र्याः पतिः | जनकः – जामाता रामः | ........ ....... .......। |
| 5. श्वश्रूः | = पत्न्याः माता | सीता – श्वश्रूः कौसल्या | ........ ....... .......। |
| | = पत्युः माता | शिवः – श्वश्रूः मेना | ........ ....... .......। |
| 6. पितामहः | = पितुः पिता | लवः – पितामहः दशरथः | ........ ....... .......। |
| 7. मातामहः | = मातुः पिता | लवः – मातामहः जनकः | ........ ....... .......। |
| 8. पौत्रः | = पुत्रस्य पुत्रः | दशरथः – पौत्रः लवः | ........ ....... .......। |
| 9. दौहित्रः | = पुत्र्याः पुत्रः | जनकः – दौहित्रः लवः | ........ ....... .......। |
| 10. पितामही | = पितुः माता | प्रद्युम्नः – पितामही देवकी | ........ ....... .......। |
| 11. मातामही | = मातुः माता | भरतः – मातामही मेनका | ........ ....... .......। |
| 12. देवरः | = पत्युः सहोदरः | सीता – देवरः लक्ष्मणः | ........ ....... .......। |
| 13. भ्रातृजाया | = सहोदरस्य पत्नी | लक्ष्मणः–भ्रातृजाया सीता | ........ ....... .......। |
| 14. याता | = देवरस्य पत्नी | रुक्मिणी – याता रेवती | ........ ....... .......। |
| 15. आवुत्तः | = भगिन्याः पतिः | कंसः – आवुत्तः वसुदेवः | ........ ....... .......। |
| 16. भागिनेयः | = भगिन्याः पुत्रः | कंसः – भागिनेयः कृष्णः | ........ ....... .......। |
| 17. श्यालः | = पत्न्याः सहोदरः | धृतराष्ट्रः –श्यालः शकुनिः | ........ ....... .......। |
| 18. पितृव्यः | = पितुः सहोदरः | भीमः – पितृव्यः धृतराष्ट्रः | ........ ....... .......। |
| 19. मातुलः | = मातुः सहोदरः | दुर्योधनः–मातुलः शकुनिः | ........ ....... .......। |
| 20. विमाता | = मातुः सपत्नी | ध्रुवः – विमाता सुरुचिः | ........ ....... .......। |
| 21. ननान्दा | = पत्युः भगिनी | रुक्मिणी–ननान्दा सुभद्रा | ........ ....... .......। |

## अभ्यासः – 217

सम्बन्धवाचकानां प्रयोगाः

**क. ख. स्तम्भयोः मध्ये सम्बन्धं सूचयन्तः वाक्यानि रचयन्तु –**

[ क. एवं ख. स्तम्भों के बीच सम्बन्ध को दर्शाते हुए वाक्य बनाइये। Construct sentences showing the relationship between the words of Part क. and Part ख.]

| | क | ख | सम्बन्धबोधकं वाक्यम् |
|---|---|---|---|
| उदा०–1. | दशरथः | कौसल्या | उदा०–1. दशरथस्य. पत्नी.. कौसल्या.। |
| 2. | सुमित्रा | दशरथः | 2. .......... ...... ........ । |
| 3. | सीता | दशरथः | 3. .......... ...... ........ । |
| 4. | रामः | सीता | 4. .......... ...... ........ । |
| 5. | सीता | रामः | 5. .......... ...... ........ । |
| 6. | कंसः | देवकी | 6. .......... ...... ........ । |
| 7. | लक्ष्मणः | दशरथः | 7. .......... ...... ........ । |
| 8. | रामः | लक्ष्मणः | 8. .......... ...... ........ । |
| 9. | कौसल्या | दशरथः | 9. .......... ...... ........ । |
| 10. | कैकेयी | दशरथः | 10. ........... ...... ........ । |

**सम्बन्धबोधकपदानि–**

भार्या / पत्नी, पुत्रः, जनकः, भगिनी, अनुजः, श्वशुरः, पतिः

# अभ्यासः – 218

**सम्बन्धवाचकानां प्रयोगाः**

**उदाहरणानुगुणं वाक्यानि रचयन्तु–**

[ उदाहरण के अनुसार वाक्यों की रचना कीजिए। Please make sentences as shown in the example. ]

उदा०– 1. गङ्गेशः – स्नुषा – रमा ...गङ्गेशस्य... ...स्नुषा... ...रमा...।
2. राकेशः – आवुत्तः – सुशीलः ............ ............ ............।
3. सीता – आवुत्तः – सुरेशः ............ ............ ............।
4. गीता – श्वशुरः – कृष्णशर्मा ............ ............ ............।
5. धर्मपालः – स्नुषा – गायत्री ............ ............ ............।
6. नम्रता – श्वश्रूः – सावित्रीदेवी ............ ............ ............।
7. गुरुप्रसादः – जामाता – हरिकुमारः ............ ............ ............।
8. सञ्जयः – पितामहः – सिद्धनाथः ............ ............ ............।
9. चन्द्रकुमारः – पितामही – यशोदादेवी ............ ............ ............।
10. कृष्णमोहनः – दौहित्रः – प्रवीणः ............ ............ ............।
11. अविनाशः – मातामहः – सुरेन्द्रपालः ............ ............ ............।
12. विभा – ननान्दा – विनुता ............ ............ ............।
13. कविता – मातुलानी – गौरी ............ ............ ............।
14. लता – देवरः – प्रकाशः ............ ............ ............।
15. शशाङ्कः – मातुलः – हरिप्रसादः ............ ............ ............।
16. नन्दकिशोरः – पितृव्या – सुमित्रादेवी ............ ............ ............।
17. स्वरूपः – भागिनेयः – मिहिरः ............ ............ ............।
18. लीना – भ्रातृजाया – राजश्रीः ............ ............ ............।
19. प्रवीणः – श्यालः – मनीषः ............ ............ ............।
20. आनन्दः – विमाता – कविता ............ ............ ............।

## अभ्यासः – 219

**षष्ठीद्विवचनबहुवचनप्रयोगाः**

✍ **उदाहरणानुगुणं रिक्तस्थानानि पूरयन्तु–**

[ उदाहरणों के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Please fill in the blanks as shown in the examples. ]

I.

उदा० – 1. सुग्रीवविभीषणौ — सुग्रीवविभीषणयोः — मित्रं — श्रीरामचन्द्रः

2. लवकुशौ — ................ — जनकः — श्रीरामचन्द्रः

3. भरतलक्ष्मणौ — ................ — अग्रजः — श्रीरामचन्द्रः

4. भरतशत्रुघ्नौ — ................ — अग्रजः — श्रीरामचन्द्रः

5. कौसल्यासुमित्रे — ................ — पुत्रः — श्रीरामचन्द्रः

6. कौसल्याकैकेय्यौ — ................ — पुत्रः — श्रीरामचन्द्रः

II.

उदा० – 7. कौरवपाण्डवौ — कौरवपाण्डवयोः — बान्धवः — श्रीकृष्णः

8. नन्दवसुदेवौ — ................ — पुत्रः — श्रीकृष्णः

9. यशोदादेवक्यौ — ................ — पुत्रः — श्रीकृष्णः

10. सुदामसुबल्यौ — ................ — मित्रं — श्रीकृष्णः

11. रुक्मिणीसत्यभामे — ................ — पतिः — श्रीकृष्णः

III.

| | | | | |
|---|---|---|---|---|
| उदा० – 12. | भीमार्जुननकुलसहदेवाः | भीमार्जुननकुलसहदेवानां | मित्रं | श्रीकृष्णः |
| 13. | गोपालकाः | ................ | प्रियः | |
| 14. | पाण्डवाः | ................ | उद्धारकः | |
| 15. | दुष्टाः | ................ | नाशकः | |
| 16. | सज्जनाः | ................ | रक्षकः | |

IV.

| | | | | |
|---|---|---|---|---|
| उदा० – 17. | लक्ष्मणभरतशत्रुघ्नाः | लक्ष्मणभरतशत्रुघ्नानां | अग्रजः | श्रीरामचन्द्रः |
| 18. | कौसल्याकैकेयीसुमित्राः | ................ | पुत्रः | |
| 19. | अयोध्याप्रजाः | ................ | नृपः | |
| 20. | राक्षसाः | ................ | संहारकः | |
| 21. | भक्ताः | ................ | उद्धारकः | |
| 22. | देवाः | ................ | रक्षकः | |

## अभ्यासः – 220

**षष्ठीबहुवचनस्य प्रयोगाः**

**कोष्ठगतशब्दानां षष्ठ्यन्तरूपैः उदाहरणानुगुणं रिक्तस्थानानि पूरयन्तु–**

[ कोष्ठ में दिये गये शब्दों के षष्ठी विभक्ति के रूपों से उदाहरण के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Please fill in the blanks by changing the words given in brackets into sixth case ending as shown in the example. ]

उदा०– 1. स्वागतकारिणी .जनानां..... स्वागतं करोति। (जनाः)
2. पण्डितः .............. रचनां करोति। (ग्रन्थाः)
3. वनपालकः .............. रक्षणं करोति। (वृक्षाः–वृक्षाणाम्)
4. मालाकारः .............. ग्रथनं करोति। (पुष्पमालाः)
5. जनाः .............. पठनं कुर्वन्ति (पत्रिकाः–पत्रिकाणाम्)
6. अधिकारी .............. परिशीलनं करोति। (सञ्चिकाः)
7. ते .............. सम्मानं कुर्वन्ति। (नर्तक्यः-नर्तकीनाम्)
8. अर्चकाः .............. पूजां कुर्वन्ति। (देवाः)
9. भारतीयाः .............. पूजां कुर्वन्ति। (नद्यः)
10. वीरप्पन् .............. दन्तान् चोरयति। (गजाः)
11. दुर्जनाः .............. वञ्चनं कुर्वन्ति। (सज्जनाः)
12. सा .............. मेलनार्थम् अगच्छत्। (सख्यः)
13. कृष्णः .............. परिपालकः। (शिष्टाः)
14. संस्कृतभाषा .............. जननी। (भारतीयभाषा–भारतीयभाषाणाम्)
15. गणेशः .............. अधिपतिः। (गणाः)
16. शुक्राचार्यः .............. गुरुः। (राक्षसाः)
17. बृहस्पतिः .............. गुरुः। (देवाः)
18. वृक्षस्य .............. कर्तनं न करोतु। (शाखाः)
19. भवान् .............. वचनम् अनुसरतु। (ज्येष्ठाः)
20. भवती .............. प्रक्षालनं करोतु। (पात्राणि–पात्राणाम्)

# अभ्यासः – 221

**षष्ठीप्रयोगाः**

**उदाहरणानुगुणं रिक्तस्थानानि पूरयन्तु–**

[ उदाहरण के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Please fill in the blanks as shown in the example. ]

| | | | | |
|---|---|---|---|---|
| उदा० – 1. | दिल्ली-नगरम् | ..भारतस्य.. | राजधानी। | (भारतम्) |
| 2. | रावणः | .............. | अग्रजः। | (शूर्पणखा) |
| 3. | रामः | .............. | जनकः। | (लवकुशौ) |
| 4. | दशरथः | .............. | जनकः। | (रामलक्ष्मणभरतशत्रुघ्नाः) |
| 5. | शकुन्तला | .............. | पुत्री। | (मेनकाविश्वामित्रौ) |
| 6. | सः | .............. | मुख्यमन्त्री। | (प्रदेशः) |
| 7. | एतानि | .............. | गृहाणि सन्ति। | (कृषकाः) |
| 8. | एतानि | .............. | पात्राणि सन्ति। | (पाकशाला) |
| 9. | एषः | .............. | रसः अस्ति। | (आम्रफलानि) |
| 10. | माण्डवी | .............. | भगिनी। | (उर्मिलासीते) |
| 11. | गणेशः | .............. | पुत्रः। | (पार्वती–परमेश्वरौ) |
| 12. | चण्डीगढ़नगरम् | .............. | राजधानी। | (हरियाणा–पञ्जाबप्रदेशौ) |
| 13. | मेघनादः | .............. | पुत्रः। | (रावणः) |
| 14. | कृष्णः | .............. | प्रियः। | (पाण्डवाः) |
| 15. | गङ्गा | .............. | पूज्या नदी। | (भारतीयाः) |
| 16. | मार्कण्डेयः | .............. | भक्तः। | (शिवः) |
| 17. | अहं | .............. | नागरिकः। | (भारतम्) |
| 18. | सः | .............. | आराधकः। | (ललितकला) |
| 19. | एषा | .............. | लेखनी। | (भगिनी) |
| 20. | तत् मम | .............. | गृहम्। | (मित्रम्) |

## अभ्यासः – 222

| एतस्य | / | एतयोः | / | एतेषाम् |
|---|---|---|---|---|
| एतस्याः | / | एतयोः | / | एतासाम् |

✍ **उदाहरणानुगुणं रिक्तस्थानानि पूरयन्तु–**

[ उदाहरणों के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Please fill in the blanks as shown in the examples. ]

उदा० – 1. एषः बालकः। ....एतस्य.... नाम मोहनः।

2. एषः गायकः। ............... नाम कुमारगन्धर्वः।

3. एषा बालिका। ....एतस्याः... नाम मोहिता।

4. एषा गायिका। ............... नाम लता।

5. एतत् नगरम्। ....एतस्य.... नाम हरिद्वारम्।

6. एतत् भवनम्। ............... नाम संस्कृतधाम।

उदा० – 7. एतौ छात्रौ। ....एतयोः... कार्यम् अध्ययनम्।

8. एतौ कृषकौ। ............... कार्यं कर्षणम्।

9. एते छात्रे। ....एतयोः... कार्यम् अध्ययनम्।

10. एते शिक्षिके। ............... कार्यं पाठनम्।

11. एते पुस्तके। ............... मूल्यम् अधिकम्।

12. एते क्रीडनके। ............... मूल्यं न्यूनम्।

उदा० – 13. एते अध्यापकाः। ....एतेषाम्.. आचरणम् उत्तमम्।

14. एते दुर्जनाः। ............... आचरणं न शोभनम्।

15. एताः परिचारिकाः। ....एतासां... कार्यं सेवा।

16. एताः मधुमक्षिकाः। ............... कार्यं मधुसंग्रहः।

17. एतानि फलानि मधुराणि। ............... रसः मधुरः।

18. एतानि पुष्पाणि सुन्दराणि। ............... वर्णः रक्तः।

19. एताः सञ्चिकाः। ............... अन्तः कागदानि सन्ति।

20. एते नीतिग्रन्थाः। भवान् ............... अध्ययनं करोतु।

## अभ्यासः – 223

**एतस्य / एतयोः / एतेषाम्**

**रिक्तस्थानानि उचितरूपेण पूरयन्तु–**

[उचित पद से रिक्त स्थानों की पूर्ति कीजिए। Please fill in the blanks with appropriate form.]

उदा० – 1. एषः छात्रः अस्ति। ............... नाम गणेशः अस्ति। ............... जनकः नागेन्द्रः। ............... जननी गौरी। ............... एकः अनुजः अस्ति। ............... एका भगिनी अपि अस्ति। ............... व्यवहारः अतिसमीचीनः अस्ति।

2. एतौ छात्रौ स्तः। ...............अध्ययनं सम्यक् प्रचलति। ............... अध्यापकाः अतीव प्रसन्नाः भवन्ति। ............... परिश्रमेण ............... प्रशंसा भवति। एतौ सोदरौ स्तः। ............... जनकः मनमोहनः। ........ जननी अन्नपूर्णा अस्ति। ............... एका अनुजा अपि अस्ति। ............... जनकः जननी भगिनी च ............... व्यवहारेण अतीव प्रसन्नाः भवन्ति। ............ परीक्षापरिणामः अपि उत्तमः आगच्छति। परीक्षायाम् ............... स्थानम् अग्रिमं भवति।

3. एते अध्यापकाः सन्ति। ...............अध्यापनम् अतीव प्रशंसनीयम् अस्ति। .............. छात्राः प्रसन्नाः भवन्ति। ............... छात्राः विज्ञानविषयविशेषज्ञाः भवन्ति। ............... प्राचार्यः ............... प्रशंसां बहु करोति।

## अभ्यासः – 224

**एतस्याः / एतयोः / एतासाम्**

**रिक्तस्थानानि उचितरूपेण पूरयन्तु–**

[उचित पद से रिक्त स्थानों की पूर्ति कीजिए। Please fill in the blanks with appropriate form.]

उदा० – एषा एका छात्रा अस्ति। ............... नाम शालिनी अस्ति। ............... जनकः शैलेन्द्रः ............... जननी मीनाक्षी अस्ति। रमेशः ........... अनुजः अस्ति। एते बालिके अपि छात्रे स्तः। ............... नाम सुनयना सुभद्रा च अस्ति। ........आचरणम् उत्तमम् अस्ति। ............... प्रशंसां मम अध्यापकः अपि करोति। एताः बालिकाः अतीव निर्धनाः सन्ति। ............... जननी एताः बहुकाठिन्येन पाठयति। ............... जनकः नास्ति। ............... सहयोगेन ............... जननी किञ्चित् कार्यं करोति। ......... स्वस्य च जीवनं यापयति। ........... अध्ययनम् ............... परिश्रमेण अर्जितेन धनेन च प्रचलति।

## अभ्यासः – 225

*तस्य / तयोः / तेषाम्*

✍ **उदाहरणानुगुणं रिक्तस्थानानि पूरयन्तु—**

[ उदाहरणों के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Please fill in the blanks as shown in the examples. ]

उदा० – 1. सः घनश्यामः। ......तस्य..... जनकः वरदाचार्यः।

2. सः श्यामः। ............... अग्रजः शङ्करः।

3. सः शिक्षकः। ............... पुस्तकम् एतत्।

4. सः अधिकारी। ............... कार्यालयः मुख्यमार्गे अस्ति।

5. सः रविः। ............... युतकं सुन्दरम् अस्ति।

6. सः सिंहः। ............... गर्जनं भयङ्करम्।

उदा० – 7. तौ कोकिलौ। ......तयोः... कण्ठः मधुरः।

8. तौ नायकौ। ............... भाषणं श्वः भविष्यति।

9. तौ अध्यापकौ। ............... कार्यम् अध्यापनम्।

10. तौ मूर्खौ। ............... विषये मा चिन्तयतु।

11. तौ चतुरौ। ............... पुत्रौ अपि चतुरौ।

12. तौ अलसौ। ............... कार्यं समाप्तं न भवति।

उदा० – 13. ते युवकाः। .....तेषां..... बलम् अधिकम्।

14. ते सेवकाः। ............... कार्यं परिशीलयतु।

15. ते वञ्चकाः। ............... विषये सावधानाः भवन्तु।

16. ते चित्रकाराः। ............... चित्रप्रदर्शनं तत्र अस्ति।

17. ते बालकाः। ............... आसक्तिः क्रीडायां भवति।

18. ते वृक्षाः। ............... फलानि मधुराणि सन्ति।

## अभ्यासः – 226

तस्याः / तयोः / तासाम्

✍ **उदाहरणानुगुणं रिक्तस्थानानि पूरयन्तु–**
[ उदाहरणों के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Please fill in the blanks as shown in the examples. ]

उदा० – 1. सा युवतिः। .....तस्याः... नाम गौरी।
2. सा गीता। ............... शाटिका सुन्दरी।
3. सा नदी। ............... वेगः अधिकः।
4. सा लता। ............... पत्राणि कोमलानि।
5. सा बुद्धिमती। ............... साहाय्यं स्वीकरोतु।
6. सा माता। ............... सहनशक्तिः अधिका।

उदा० – 7. ते बालिके। .....तयोः.... पुस्तकं मम समीपे अस्ति।
8. ते नद्यौ। ............... जलं मधुरम् अस्ति।
9. ते महिले। ............... गायनं सम्यक् भवति।
10. ते शिक्षिके। ............... कार्यम् अध्यापनम्।
11. ते गृहिण्यौ। ............... व्यवहारः उत्तमः।
12. ते छात्रे। ............... अध्यापकः शिवनारायणः।

उदा० – 13. ताः सेविकाः। .....तासां.... कार्यम् अवलोकयतु।
14. ताः वृद्धाः। ............... बलं न्यूनम्।
15. ताः शाटिकाः। ............... वर्णः श्वेतः।
16. ताः नार्यः। ............... चातुर्यं बहु अस्ति।
17. ताः नर्तक्यः। ............... रङ्गप्रवेशः श्वः भविष्यति।
18. ताः वैद्याः। ............... कार्यं रुग्णानां शुश्रूषा।

## अभ्यासः – 227

तव / युवयोः / युष्माकम्

✍ **उदाहरणानुगुणं रिक्तस्थानानि पूरयन्तु–**
[ उदाहरणों के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Please fill in the blnaks as shown in the examples. ]

उदा० – 1. त्वं छात्रः। ......तव..... कार्यम् अध्ययनम्।
2. त्वं कृषकः। ............... कार्यं कर्षणम्।
3. त्वं छात्रा। ............... आचरणम् उत्तमम्।
4. त्वं पाचिका। ............... कार्यं पाचनम्।
5. त्वं मित्रम्। ............... स्वभावः मधुरः।

उदा० – 6. युवां भृत्यौ। ....युवयोः... सेवा उत्तमा।
7. युवां क्रीडकौ। ............... क्रीडा आकर्षिका।
8. युवां नर्तक्यौ। ............... नृत्यं रमणीयम्।
9. युवां कन्ये। ............... रात्रौ भ्रमणम् अनुचितम्।
10. युवां मित्रे। ............... दर्शनं सुखदम्।

उदा० – 11. यूयं कनिष्ठाः। ....युष्माकं.... व्यवहारः नम्रः।
12. यूयं बालिकाः। ............... परीक्षापरिणामः समीचीनः।
13. यूयम् अभिनेत्र्यः। ............... अभिनयः हृदयङ्गमः।
14. यूयं बालकाः। ............... स्वभावः चञ्चलः।
15. यूयं मित्राणि। ............... आगमनं सन्तोषजनकम्।

## अभ्यासः – 228

*मम / आवयोः / अस्माकम्*

✍ **उदाहरणानुगुणं रिक्तस्थानानि पूरयन्तु–**

[ उदाहरणों के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Please fill in the blanks as shown in the examples. ]

उदा०– 1. अहं छात्रः। ......**मम**..... नाम रमेशः।

2. अहं वैद्यः। ............... कार्यं रुग्णसेवा।

3. अहं छात्रा। ............... नाम विनोदिनी।

4. अहम् अध्यापिका। ............... कार्यं शिक्षणम्।

5. अहं रमेशस्य मित्रम्। ............... नाम पञ्चाननः।

उदा०– 6. आवां बालकौ। ...**आवयोः**... मित्रं नरेन्द्रः।

7. आवां बालिके। ............... शिक्षिका सुरेखा।

8. आवां रजकौ। ............... कार्यं वस्त्रप्रक्षालनम्।

9. आवां गृहिण्यौ। ............... गृहं नगरे अस्ति।

10. आवां मित्रे। ............... विद्यालयः उत्तमः।

उदा०– 11. वयम् अध्यापकाः। ...**अस्माकं**.... धर्मः अध्यापनम्।

12. वयं धर्माचार्याः। ............... लक्ष्यं धर्मशिक्षणम्।

13. वयं छात्राः। ............... कार्यम् अध्ययनम्

14. वयं मालाकार्यः। ............... कार्यं मालाविक्रयणम्।

15. वयं मित्राणि। ............... मैत्री प्रगाढा।

## अभ्यासः – 229

**सर्वनामशब्दानां षष्ठ्यां प्रयोगाः**

✍ **उदाहरणानुगुणं रिक्तस्थानानि पूरयन्तु–**

[ उदाहरण के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Please fill in the blanks as shown in the example. ]

उदा० – 1. आवां छात्रौ। ....आवयोः.... कार्यम् अध्ययनम्।

2. एषः बालकः। ............... नाम सुदेवः।

3. ते अध्यापकाः। ......तेषां.... ज्ञानम् अत्यधिकम्।

4. ते बालिके। ............... परीक्षाफलं समीचीनम्।

5. ताः महिलाः। ............... सम्मानं कुर्वन्तु।

6. एतौ वृद्धौ। ............... सेवां करोतु।

7. त्वं युवकः। ............... धर्मः राष्ट्रसेवा।

8. वयं सैनिकाः। ............... धर्मः राष्ट्ररक्षा।

9. युवाम् अन्तरिक्षयात्रिकौ। ............... कार्यम् अन्तरिक्षयात्रा।

10. यूयं वैमानिकाः। ............... कार्यं विमानचालनम्।

11. सः आरक्षकः। ............... धर्मः अनुशासनरक्षा।

12. एषा लता। ............... पुष्पाणि सुन्दराणि।

13. तौ ज्येष्ठौ। ............... आदेशं पालयतु।

14. सा बुद्धिमती। ............... साहाय्यं स्वीकरोतु।

15. तत् पुष्पम्। ............... सुगन्धः आह्लादकरः।

16. तानि वाहनानि। ............... वेगः महान्।

17. अहम् अभिमन्युः। ............... माता उत्तरा।

18. एतत फलम्। ............... आकारं पश्यतु।

19. एतानि गृहाणि। ............... औन्नत्यं बहु अस्ति।

20. वयं भारतीयाः। ...............देशः भारतदेशः।

**पुरतः/पृष्ठतः/वामतः/दक्षिणतः/उपरि इति शब्दानां परिचयः।**




विद्यालयस्य <u>पुरतः</u> छात्राः सन्ति।
विद्यालयस्य <u>पृष्ठतः</u> पर्वतः अस्ति।
विद्यालयस्य <u>वामतः</u> उद्यानम् अस्ति।
विद्यालयस्य <u>दक्षिणतः</u> वृक्षाः सन्ति।
विद्यालयस्य <u>उपरि</u> जलागारः अस्ति।

## अभ्यासः – 230

पुरतः /पृष्ठतः/ उपरि/अधः/वामतः/दक्षिणतः/अन्तः
इति शब्दानां प्रयोगे षष्ठी

✍ **उदाहरणानुगुणं रिक्तस्थानानि पूरयन्तु–**
[ उदाहरणों के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Please fill in the blanks as shown in the examples. ]

I. उदा० – 1. (गृहम्) .....गृहस्य.... ...पुरतः उद्यानम् अस्ति।
2. (उद्यानम्) ............... ......... मार्गः अस्ति।
3. (शिवः) ............... ......... नन्दिविग्रहः अस्ति।
4. (भवनम्) ............... ......... मुख्यद्वारम् अस्ति।
5. (कार्यालयः) ............... ......... यानानि तिष्ठन्ति।

II. उदा० – 6. (मन्दिरम्) ...मन्दिरस्य.. .पृष्ठतः वृषभः निद्राति।
7. (गृहम्) ............... ......... कूपः अस्ति।
8. (उत्पीठिका) ............... ......... आसन्दः अस्ति।
9. (भवनम्) ............... ......... सस्यानि सन्ति।
10. (विद्यालयः) ............... ......... क्रीडाङ्गणम् अस्ति।

III. उदा० – 11. (भवनम्) ....भवनस्य... ...उपरि. जलागारम् अस्ति।
12. (जलागारः) ............... ......... काकः अस्ति।
13. (उत्पीठिका) ............... ......... पुस्तकम् अस्ति।
14. (सञ्चिका) ............... ......... नाम लिखितम् अस्ति।
15. (दीपः) ............... ......... कीटः भ्रमति।

| | | | | | | |
|---|---|---|---|---|---|---|
| IV. | उदा०– | 16. | (उत्पीठिका) | उत्पीठिकायाः | अधः | अवकरिका अस्ति। |
| | | 17. | (वृक्षः) | ............... | ......... | बालाः क्रीडन्ति। |
| | | 18. | (वित्तकोशः) | ............... | ......... | कार्यालयः अस्ति। |
| | | 19. | (पत्रभारः) | ............... | ......... | अद्यतनपत्रिका अस्ति। |
| | | 20. | (सोपानम्) | ............... | ......... | बिडालः अस्ति। |
| V. | उदा०– | 21. | (उत्पीठिका) | उत्पीठिकायाः | वामतः | अवकरिका अस्ति। |
| | | 22. | (आम्रवृक्षः) | ............... | ......... | कदलीवृक्षः अस्ति। |
| | | 23. | (नलिका) | ............... | ......... | द्रोणी अस्ति। |
| | | 24. | (लेखनी) | ............... | ......... | मापिका अस्ति। |
| | | 25. | (मन्दिरम्) | ............... | ......... | उद्यानम् अस्ति। |
| VI. | उदा०– | 26. | (कार्यालयः) | कार्यालयस्य | दक्षिणतः | उपाहारगृहम् अस्ति। |
| | | 27. | (मार्गः) | ............... | .......... | आम्रवृक्षाः सन्ति। |
| | | 28. | (पाठशाला) | ............... | ......... | ग्रन्थालयः अस्ति। |
| | | 29. | (भवनम्) | ............... | ......... | आपणः अस्ति। |
| | | 30. | (व्यजनम्) | ............... | ......... | पिञ्जरम् अस्ति। |
| VII. | उदा०– | 31. | (स्यूतः) | स्यूतस्य | अन्तः | धनम् अस्ति। |
| | | 32. | (पाकशाला) | ............... | ......... | चुल्लिः अस्ति। |
| | | 33. | (भवनम्) | ............... | ......... | यन्त्राणि सन्ति। |
| | | 34. | (प्रकोष्ठः) | ............... | ......... | कपाटिका अस्ति। |
| | | 35. | (पेटिका) | ............... | ......... | वस्त्राणि सन्ति। |

## अभ्यासः – 231

**पुरतः / पृष्ठतः / उपरि / अधः / वामतः / दक्षिणतः / अन्तः इति शब्दानां प्रयोगे षष्ठी**

**कोष्ठगतपदानां षष्ठ्यन्तरूपैः उदाहरणानुगुणं रिक्तस्थानानि पूरयन्तु–**
[ कोष्ठक में दिये गये शब्दों की षष्ठी विभक्ति के रूपों से उदाहरण के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Please fill in the blanks by changing the words given in brackets into sixth case ending. ]

उदा० – 1. ....पर्वतस्य... वामतः नदी प्रवहति। (पर्वतः)
2. ............... पृष्ठतः क्रीडाक्षेत्रम् अस्ति। (विद्यालयः)
3. ............... अधः बिडालः स्वपिति। (फलकम्)
4. ............... उपरि कोकिलः कूजति। (आम्रवृक्षः)
5. ............... पुरतः न्यायालयः अस्ति। (सचिवालयः)
6. ............... दक्षिणतः ध्यानकेन्द्रम् अस्ति। (व्यायामशाला)
7. ............... पृष्ठतः गुप्तमार्गः अस्ति। (प्रधानमार्गः)
8. ............... अन्तः मण्डूकः रटति। (कूपः)
9. ............... वामतः वसतिगृहम् अस्ति। (वित्तकोषः)
10. ............... उपरि हस्तिपकः अस्ति। (गजः)
11. ............... अन्तः पुष्पाणि सन्ति। (उद्यानम्)
12. ............... पुरतः तुलसीवृक्षः अस्ति। (गृहम्)
13. ............... पृष्ठतः वित्तकोषः अस्ति। (पाठशाला)
14. ............... वामतः देवगृहम् अस्ति। (पाकशाला)
15. ............... अधः नासिका अस्ति। (नेत्रे)
16. ............... अन्तः जलम् अस्ति। (कूपी)
17. ............... अन्तः पुनःपूरणी अस्ति। (लेखनी)
18. ............... उपरि मा उपविशतु। (वृक्षशाखा)
19. ............... पुरतः नटराजविग्रहः अस्ति। (नृत्यशाला)
20. ............... दक्षिणतः गणेशः तिष्ठति। (सुरेशः)

# पञ्चमः स्तबकः

## 5.3 तृतीयः पाठः

## [ सप्तमी ]

### 5.3.1 सप्तमीप्रयोगाः

**ध्यानेन पठन्तु-**

[ ध्यान से पढ़िए। Please read carefully. ]



नीडः



वृक्षः



नीडः वृक्षे अस्ति।



खगाः



नीडः



खगाः नीडे वसन्ति।



मीनः



जलम्



मीनः जले तरति।



लेखनी



उत्पीठिका



लेखनी उत्पीठिकायाम् अस्ति।



महिला



पाकशाला



महिला पाकशालायां पचति ।



चटका



शाखा



चटका शाखायाम् उपविशति ।



फलानि



स्थाली



फलानि स्थाल्यां सन्ति ।



नौका



नदी



नौका नद्यां चलति ।



मुनिवरः



नदी



मुनिवरः नद्याम् अस्ति ।

## अभ्यासः – 232

**उदाहरणानुगुणं वाक्यानि लिखन्तु-**

[ उदाहरणों के अनुसार वाक्यों को लिखिए। Please make sentences as shown in the examples. ]



मुनिवरः



कुटीरः



मुनिवरः कुटीरे वसति।



वृद्धः



आसन्दः



वृद्धः आसन्दे उपविशति।

पुं0

उदा0- 1. बालकः (विद्यालयः) पठति।
2. भक्ताः (देवालयः) अर्चन्ति।
3. यानानि (मार्गः) गच्छन्ति।
4. खगाः (वृक्षः) कूजन्ति।

1. बालकः विद्यालये पठति।
2. .......... ............ ............ ।
3. .......... ............ ............ ।
4. .......... ............ .......... ।

5. मृगाः (प्राणिविहारः) विहरन्ति । — 5. ........... ........... ...........।

6. अध्यापिका (पुस्तकालयः) पठति । — 6. ........... ........... ...........।

**आ० स्त्री०**

उदा०– 7. पुष्पाणि (लता) विकसन्ति । — 7. पुष्पाणि ..लतायां... विकसन्ति ।

8. बालिका (दोला) स्वपिति । — 8. ........... ........... ...........।

9. छात्राः (पाठशाला) पठन्ति । — 9. ........... ........... ...........।

10. वत्साः (गोशाला) तिष्ठन्ति । — 10. ........... ........... ...........।

11. पर्यटकाः (मेला) भ्रमन्ति । — 11. ........... ........... ...........।

12. वानरः (शाखा) उपविशति । — 12. ........... ........... ...........।

**ई० स्त्री०**

उदा०–13. महिलाः (नदी) स्नान्ति । — 13. महिलाः ...नद्यां... स्नान्ति ।

14. राज्यपालः (राजधानी) तिष्ठति । — 14. ........... ........... ...........।

15. अग्रजः (भगिनी) स्निह्यति । — 15. ........... ........... ...........।

16. कृषकौ (शकटी) उपविशतः । — 16. ........... ........... ...........।

17. गृहिणी (भिक्षुकी) दयां करोति । — 17. ....... ........ ...... ..........।

18. मसी (लेखनी) अस्ति । — 18. .......... .......... ...........।

**अ० नपुं०**

उदा०–19. मीनाः (जलम्) तरन्ति । — 19. मीनाः ....जले.. तरन्ति ।

20. जनाः (लोकयानम्) उपविशन्ति । — 20. .......... .......... ..........।

21. विग्रहाः (मन्दिरम्) सन्ति । — 21. .......... .......... ..........।

22. कृष्णः (मित्राणि) स्निह्यति । — 22. .......... .......... ..........।

23. कमलिनी (आसनम्) उपविशति । — 23. .......... .......... ..........।

24. नक्षत्रं (गगनम्) भाति । — 24. .......... .......... ..........।

## अभ्यासः – 233

**सप्तम्यां रूपाणि**

**उदाहरणानुगुणं रूपाणि लिखन्तु–**

[ उदाहरणों के अनुसार रूपों को लिखिए। Please form sentences as shown in the examples. ]

**अ० पुं०**

| | | | | | |
|---|---|---|---|---|---|
| उदा० – 1. | देवः | → | देवे | देवयोः | देवेषु |
| 2. | वृक्षः | → | ............ | ............ | ............ । |
| 3. | धीवरः | → | ............ | ............ | ............ । |
| 4. | छात्रः | → | ............ | ............ | ............ । |
| 5. | चालकः | → | ............ | ............ | ............ |

**आ० स्त्री०**

| | | | | | |
|---|---|---|---|---|---|
| उदा० – 6. | बालिका | → | बालिकायाम् | बालिकयोः | बालिकासु |
| 7. | तालिका | → | ............ | ............ | ............ । |
| 8. | माला | → | ............ | ............ | ............ । |
| 9. | छाया | → | ............ | ............ | ............ । |
| 10. | गायिका | → | ............ | ............ | ............ । |

**ई० स्त्री०**

| | | | | | |
|---|---|---|---|---|---|
| 11. | विद्यार्थिनी | → | विद्यार्थिन्याम् | विद्यार्थिन्योः | विद्यार्थिनीषु |
| 12. | गृहिणी | → | ............ | ............ | ............ । |
| 13. | दर्वी | → | ............ | ............ | ............ । |
| 14. | कर्तरी | → | ............ | ............ | ............ । |
| 15. | सूची | → | ............ | ............ | ............ । |

**अ० नपुं०**

| | | | | | |
|---|---|---|---|---|---|
| 16. | फलम् | → | फले | फलयोः | फलेषु |
| 17. | खनित्रम् | → | ............ | ............ | ............ । |
| 18. | नीडम् | → | ............ | ............ | ............ । |
| 19. | छत्रम् | → | ............ | ............ | ............ । |
| 20. | करतलम् | → | ............ | ............ | ............ । |

## सर्वनामशब्दानां सप्तम्यां रूपाणि

**ध्यानेन पठन्तु–**

[ ध्यान से पढ़िए। Please read carefully. ]

| | | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|---|
| एतत् | पुं० | एतस्मिन् | एतयोः | एतेषु |
| | नपुं० | एतस्मिन् | एतयोः | एतेषु |
| | स्त्री० | एतस्याम् | एतयोः | एतासु |
| तत् | पुं० | तस्मिन् | तयोः | तेषु |
| | नपुं० | तस्मिन् | तयोः | तेषु |
| | स्त्री० | तस्याम् | तयोः | तासु |
| भवत् | पुं० | भवति | भवतोः | भवत्सु |
| | नपुं० | भवति | भवतोः | भवत्सु |
| | स्त्री० | भवत्याम् | भवत्योः | भवतीषु |
| किम् | पुं० | कस्मिन् | कयोः | केषु |
| | नपुं० | कस्मिन् | कयोः | केषु |
| | स्त्री० | कस्याम् | कयोः | कासु |
| सर्व | पुं० | सर्वे | सर्वयोः | सर्वेषु |
| | नपुं० | सर्वे | सर्वयोः | सर्वेषु |
| | स्त्री० | सर्वस्याम् | सर्वयोः | सर्वासु |

## अभ्यासः – 234

कुत्र ? ...... (सप्तम्यन्तपदम्)

✍ **प्रश्नानुगुणम् उत्तरं लिखन्तु–**

[ प्रश्नों के अनुसार उत्तर लिखिए। Please write answers for the following questions. ]

| प्रश्नः | | उत्तरम् |
|---|---|---|
| 1. छात्राः कुत्र पठन्ति ? | (विद्यालयः) | ..विद्यालये...... । |
| 2. अध्यापकाः कुत्र पठन्ति ? | (पुस्तकालयः) | ................ । |
| 3. कृषकाः कुत्र वसन्ति ? | (ग्रामः) | ................ । |
| 4. बालकाः कुत्र क्रीडन्ति ? | (क्रीडाङ्गणम्) | ................ । |
| 5. आपणिकः कुत्र विक्रयणं करोति ? | (आपणः) | ................ । |
| 6. ग्रामीणाः कुत्र स्नान्ति ? | (कूपः) | ................ । |
| 7. मयूराः कुत्र नृत्यन्ति ? | (वनम्) | ................ । |
| 8. अश्वाः कुत्र नृत्यन्ति ? | (अश्वशाला) | ................ । |
| 9. गजाः कुत्र तिष्ठन्ति ? | (गजशाला) | ................ । |
| 10. जनाः कुत्र स्नान्ति ? | (नदी) | ................ । |
| 11. भक्ताः कुत्र स्नान्ति ? | (गङ्गा) | ................ । |
| 12. वाहनानि कुत्र सञ्चरन्ति ? | (मार्गः) | ................ । |
| 13. पक्षिणः कुत्र निवसन्ति ? | (नीडः) | ................ । |
| 14. मृगाः कुत्र निवसन्ति ? | (वनम्) | ................ । |
| 15. दन्ताः कुत्र सन्ति ? | (मुखम्) | ................ । |
| 16. शिशुः कुत्र निद्राति ? | (प्रेङ्खा) | ................ । |
| 17. लोकसभा कुत्र अस्ति ? | (देहली) | ................ । |
| 18. मौक्तिकानि कुत्र सन्ति ? | (सागरः) | ................ । |
| 19. फलं कुत्र अस्ति ? | (वृक्षः) | ................ । |
| 20. कृषकः कुत्र कार्यं करोति ? | (क्षेत्रम्) | ................ । |
| 21. जनाः शाकानि कुत्र क्रीणन्ति ? | (शाकापणः) | ................ । |

## अभ्यासः – 235

....... कुत्र ....... ?

**उत्तराणि दृष्ट्वा स्थूलाक्षरैः निर्दिष्टम् अंशम् आश्रित्य प्रश्नान् लिखन्तु–**

[ उत्तरों को देखकर स्थूलाक्षरों में निर्दिष्ट अंशो पर आधारित प्रश्नों को लिखिए। Please frame questions for the given answers based on the bold words.. ]

| | | | |
|---|---|---|---|
| उदा०– | 1. छात्राः **पुस्तकालये** पठन्ति। | 1. | ..छात्राः.. कुत्र... पठन्ति.... ? |
| | 2. मीनाः **नद्यां** तरन्ति। | 2. | ......... ....... .......... ? |
| | 3. पुष्पाणि **लतायां** विकसन्ति। | 3. | ......... ....... .......... ? |
| | 4. फलानि **वृक्षे** फलन्ति। | 4. | ......... ....... .......... ? |
| | 5. कृषकाः **क्षेत्रे** कर्षन्ति। | 5. | ......... ....... .......... ? |
| | 6. घण्टाः **मन्दिरे** नदन्ति। | 6. | ......... ....... .......... ? |
| | 7. कुक्कुराः **मार्गे** बुक्कन्ति। | 7. | ......... ....... .......... ? |
| | 8. खगाः **वृक्षे** वसन्ति। | 8. | ......... ....... .......... ? |
| | 9. वानराः **शाखासु** उपविशन्ति। | 9. | ......... ....... .......... ? |
| | 10. पर्यटकाः **नगरे** भ्रमन्ति। | 10. | ......... ....... .......... ? |
| | 11. भवनानि **पत्तने** सन्ति। | 11. | ......... ....... .......... ? |
| | 12. कथा **पुस्तके** अस्ति। | 12 | .......... ....... .......... ? |
| | 13. जलं **कूपे** अस्ति। | 13. | ......... ....... .......... ? |
| | 14. बालकः **मञ्चे** निद्राति। | 14. | ......... ....... .......... ? |
| | 15. धनं **कोषे** अस्ति। | 15. | ......... ....... .......... ? |
| | 16. विग्रहः **देवालये** अस्ति। | 16. | ......... ....... .......... ? |
| | 17. छात्राः **छात्रावासे** वसन्ति। | 17. | ......... ....... .......... ? |
| | 18. शिक्षकः **विद्यालये** पाठयति। | 18. | ......... ....... .......... ? |
| | 19. क्रीडापटुः **क्रीडाङ्गणे** क्रीडाभ्यासं करोति। | 19. | ........ ....... ....... ......... ? |
| | 20. भिक्षुकः **मार्गे** तिष्ठति। | 20. | ......... ....... .......... ? |

## अभ्यासः – 236

**सप्तम्यन्तपदप्रयोगाः**

**मञ्जूषायां प्रदत्तैः शब्दैः सह सप्तमीं विभक्तिं संयोज्य उदाहरणानुसारं रिक्तस्थानानि पूरयन्तु–**
[ मञ्जूषा में दिये गये शब्दों के सप्तम्यन्त रूपों से उदाहरण के अनुसार रिक्तस्थानों की पूर्ति कीजिए। Please fill in the blanks by adding seventh case ending to the words given in the box. ]

| पाकशाला, | प्राङ्गणम्, | वनम्, |
|---|---|---|
| जलम्, गङ्गा, | गुरुकुलम्, | वृक्षः, |
| विद्यालयः, | भवनम्, | कुटीरम्, |
| उद्यानम् | | |

उदा० – 1. शिक्षकाः ..विद्यालये... पाठयन्ति।

2. सिंहाः .............. गर्जन्ति।

3. मीनाः .............. तरन्ति।

4. मयूराः .............. नृत्यन्ति।

5. बालाः .............. क्रीडन्ति।

6. महिलाः .............. अन्नं पचन्ति।

7. भक्ताः .............. स्नान्ति।

8. शिष्याः .............. निवसन्ति।

9. काकाः .............. उपविशन्ति।

10. धनिकाः .............. निवसन्ति।

11. निर्धनाः .............. निवसन्ति।

## अभ्यासः – 236+

**निर्धारणे सप्तमी**

उदा० – ..भीम–अर्जुनयोः.. भीमः ज्येष्ठः। (भीम–अर्जुनौ)

12. ............... पाण्डवः श्रेष्ठः। (कौरव–पाण्डवौ)

13. ............... यमुना गभीरा। (गङ्गा–यमुने)

14. ............... सिंहः बलवान्। (सिंह–व्याघ्रौ)

15. ............... ग्रामः शान्तः। (ग्राम–नगरे)

16. ............... सर्पः सरीसृपः। (सर्प–नकुलौ)

17. ............... पिकस्य स्वरः मधुरः। (काक-पिकौ)

18. ............... काकः कृष्णः। (बक–काकौ)

19. ............... रामः श्रेष्ठः। (राम-रावणौ)

20. ............... राक्षसः क्रूरः। (देव–राक्षसौ)

उदा०–21. धर्मराजः (पाण्डवाः) ज्येष्ठः। 21. ...धर्मराजः... पाण्डवेषु. ..ज्येष्ठः..।

22. दुर्योधनः (कौरवाः) ज्येष्ठः। 22. ............. .......... ...........।

23. काकः (खगाः) चतुरः। 23. ............. .......... ...........।

24. रामः (पुरुषाः) उत्तमः। 24. ............. .......... ...........।

25. प्रयागः (तीर्थानि) श्रेष्ठः। 25. ............. .......... ...........।

26. काशी (नगर्यः) पवित्रा। 26. ............. .......... ...........।

27. गजः (जीवाः) विशालः। 27. ............. .......... ...........।

28. भीष्मः (कौरवाः) ज्येष्ठः। 28. ............. .......... ...........।

29. अर्जुनः (पाण्डवाः) धीरः। 29. ............. .......... ...........।

30. कमलं (पुष्पाणि) उत्तमम्। 30. ............. .......... ...........।

## अभ्यासः – 237

**सप्तम्यन्तपदप्रयोगाः**

**उदाहरणानुगुणं कोष्ठगतशब्दानां सप्तम्यन्तरूपैः रिक्तस्थानानि पूरयन्तु–**

[ कोष्ठक में दिये गये शब्दों के सप्तम्यन्त रूपों से उदाहरण के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Please fill in the blanks by adding seventh case ending to the words given in brackets. ]

उदा० – 1. धीवरः ...नद्यां... जालं प्रसारयति (नदी)

2. यतिवरः .............. स्नातुं गच्छति। (सङ्गमः)

3. भक्तः .............. जगन्नाथम् अर्चति। (पुरी)

4. पर्यटकः .............. चित्राणि प्रशंसति। (कोणार्कः)

5. बालकाः .............. जन्तून् पश्यन्ति। (नन्दनकाननम्)

6. गुरुः .............. उपविशति। (कटः)

7. शिवः .............. वसति। (हिमालयः)

8. युधिष्ठिरः .............. श्रेष्ठः। (पाण्डवाः)

9. .............. जननी स्नेहमयी। (जनक–जनन्यौ)

10. .............. नरः दुर्बलः। (नर–राक्षसौ)

11. .............. शक्तिः कलौ युगे। (संघः)

12. इन्द्रः .............. शासनं करोति। (स्वर्गः)

13. हरिः .............. शयनं करोति (सागरः)

14. ब्रह्मदेवः .............. उपविशति। (कमलम्)

15. .............. कौरवाः दुष्टाः। (पाण्डव–कौरवौ)

16. चाणक्यः .............. वसति। (कुटीरम्)

17. वटुः .............. अध्ययनं करोति। (गुरुकुलम्)

18. महाराजः .............. उपविशति। (सिंहासनम्)

19. महाराजाः .............. मिलन्ति। (राजसभा)

20. मीनाः .............. तरन्ति। (तडागः)

## अभ्यासः – 238

**निपुणकुशलादीनां प्रयोगे सप्तमी**

✍ **उदाहरणानुगुणं कोष्ठगतशब्दानां सप्तम्यन्तरूपैः रिक्तस्थानानि पूरयन्तु–**
[ कोष्ठक में दिये गये शब्दों के सप्तम्यन्त रूपों से उदाहरण के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Please fill in the blanks by adding seventh case ending to the words given in brackets. ]

उदा०– 1. एषा ......नृत्ये..... कुशला। ( नृत्यम् )
2. सा ............... निपुणा। ( कार्यम् )
3. सः ............... कुशलः। ( विज्ञानम् )
4. भवान् ............... कुशलः। ( व्यवहारः )
5. भवती ............... समर्था। ( पाककार्यम् )
6. जगन्नाथः ............... कुशलः। ( अध्यापनम् )
7. बालकः ............... निपुणः। ( चित्राङ्कनम् )
8. एषः ............... समर्थः। ( श्लोकोच्चारणम् )
9. भवती ............... निपुणा। ( गृहकार्यम् )
10. अहं ............... कुशलः। ( गानम् )
11. सः ............... चतुरः। ( गणितम् )
12. सा ............... कुशला। ( चित्रकला )
13. सः ............... सरलः। ( जीवनम् )
14. सरिता ............... चतुरा। ( भाषणम् )
15. बालः ............... मन्दः। ( भोजनम् )
16. कुमारः ............... अलसः। ( कार्यम् )
17. एषः ............... प्रवीणः। ( मृदङ्गवादनम् )
18. एषः ............... पण्डितः। ( सर्वविषयः )
19. वीरः ............... शूरः। ( रणम् )
20. बालिका ............... अग्रेसरा। ( क्रीडा )

# अभ्यासः – 239

**प्रीतिः, आसक्तिः, स्नेहः, विश्वासः इत्यादीनां शब्दानां प्रयोगे सप्तमी**

**उदाहरणानुगुणं कोष्ठगतशब्दानां सप्तम्यन्तरूपैः रिक्तस्थानानि पूरयन्तु–**
[ कोष्ठक में दिये गये शब्दों के सप्तम्यन्त रूपों से उदाहरण के अनुसार रिक्त स्थानों की पूर्ति कीजिए। Please fill in the blanks by adding seventh case ending to the words given in brackets. ]

उदा० –
1. जननी ....पुत्रीषु..... स्निह्यति। ( पुत्र्यः )
2. अध्यापकः ............... स्निह्यति। ( छात्राः पुं० )
3. भगिन्यः ............... स्निह्यन्ति। ( अनुजाः )
4. रुग्णाः ............... विश्वासं कुर्वन्ति। ( वैद्याः )
5. गृहस्थः ............... विश्वासं करोति। ( सेवकः )
6. जनकः ............... विश्वासं करोति। ( पुत्राः )
7. अम्बायाः ............... प्रीतिः अस्ति। ( पुत्रः )
8. देशसेवकस्य ............... प्रीतिः अस्ति। ( देशः )
9. यतिवरस्य ............... प्रीतिः अस्ति। ( ध्यानम् )
10. राक्षसस्य ............... आसक्तिः। ( स्वर्गः )
11. मुनिवरस्य ............... आसक्तिः। ( मोक्षः )
12. दुर्जनस्य ............... आसक्तिः। ( असदाचरणम् )
13. तक्षकः ............... निपुणः। ( तक्षणम् )
14. योगिवरः ............... कुशलः। ( योगः )
15. पाचकः ............... निपुणः। ( पाककार्यम् )
16. भक्तानां ............... भक्तिः। ( देवताः )
17. सेविकानां ............... श्रद्धा अस्ति। ( राज्ञी )
18. जनकः ............... वात्सल्यं प्रदर्शयति। ( सन्तानाः )
19. प्रजानां ............... आदरः ( नृपाः )
20. पुत्रः ............... विनयं प्रदर्शयति। ( जनकजनन्यौ )

## [ 6.2.4 शब्दरूपाभ्यासः ]

## अभ्यासः – 282

**सप्तसु विभक्तिषु प्रयोगाः**

**वाक्येषु लिखितेभ्यः शब्देभ्यः यथोचितविभक्तिं योजयन्तः वाक्यानि लिखन्तु–**
[ अधोलिखित वाक्यों में प्रयुक्त शब्दों से यथोचित विभक्तियों को जोड़कर वाक्यों को लिखिए। Please write down sentences by adding proper *Vibhaktis* to the words. ]

| | | | | |
|---|---|---|---|---|
| उदा० – 1. | ..राम. विद्यालय. गच्छति। | ..रामः.. | .विद्यालयं.... | गच्छति...। |
| 2. | तत् (पुं०) भोजन कुर्वन्ति। | ......... | ............... | ..............। |
| 3. | अस्मद् फल खादामि। | ......... | ............... | ..............। |
| 4. | मूर्ख सज्जन निन्दन्ति। | ......... | ............... | ..............। |
| 5. | छात्र कन्दुक क्रीडतः। | ......... | ............... | ..............। |
| 6. | युष्मद् रोटिका खादसि। | ......... | ............... | ..............। |
| 7. | युष्मद् संस्कृत जानीथ। | ......... | ............... | ..............। |
| 8. | तत् (पुं०) विद्यालय अगच्छन्। | ......... | ............... | ..............। |
| 9. | अस्मद् फल आनयामः। | ......... | ............... | ..............। |
| 10. | वैद्य औषध यच्छन्ति। | ......... | ............... | ..............। |
| 11. | रुग्ण कष्ट अनुभवन्ति। | ......... | ............... | ..............। |
| 12. | दुष्ट खग मारयति। | ......... | ............... | ..............। |
| 13. | एतत् (स्त्री०) रङ्गवल्ली लिखति। | ......... | ............... | ..............। |
| 14. | जननी पुत्र स्मरति। | ......... | ............... | ..............। |
| 15. | गृहिणी पाक कुर्वन्ति। | ......... | ............... | ..............। |
| 16. | तत् (पुं०) आसन्द नयन्ति। | ......... | ............... | ..............। |
| 17. | महिला शाटिका क्रीणन्ति। | ......... | ............... | ..............। |
| 18. | चोर चौर्य करोति। | ......... | ............... | ..............। |
| 19. | एतद् (स्त्री०) फलरस पिबन्ति। | ......... | ............... | ..............। |
| 20. | तत् (स्त्री०) पत्र लिखन्ति। | ......... | ............... | ..............। |
| 21. | अस्मद् नगरी गच्छामः। | ......... | ............... | ..............। |
| 22. | नारी गीत गायन्ति। | ......... | ............... | ..............। |
| 23. | पण्डित ग्रन्थ पठन्ति। | ......... | ............... | ..............। |
| 24. | तत् (पुं०) काव्य लिखन्ति। | ......... | ............... | ..............। |

## अभ्यासः – 283

**सप्तसु विभक्तिषु प्रयोगाः**

**शब्दानाम् उचितानि विभक्तिरूपाणि लिखित्वा कथां पुनः लिखन्तु–**
[ शब्दों के उचित विभक्ति–रूपों को लिखकर कथा को पुनः लिखिए। Rewrite the story by using proper *Vibhakti* forms of the words. ]

उदा०– 1. राम अयोध्या महाराज आसीत्।
2. तत् पत्नी सीता।
3. राम पितृ नाम दशरथ।
4. जननी नाम कौसल्या।
5. राम 3 सहोदर आसन्।
6. प्रथम नाम लक्ष्मण।
7. द्वितीय नाम भरत।
8. तृतीयस्य नाम शत्रुघ्न।
9. राम कैकेयी इच्छानुसारं वन गतवान्।
10. वन तत् सुग्रीव आञ्जनेय च प्राप्तवान्।
11. रावण वन सीता अपहृतवान्।
12. राम अतीव दुःखित अभवत्।
13. आञ्जनेय साहाय्येन राम सीता पुनः प्राप्तवान्।
14. वनवास समाप्य अयोध्या प्रति आगतवान्।

उदा०– 1. ..रामः.. ..अयोध्यायाः ......महाराजः... .....आसीत्।
2. ......... ............... ..............।
3. ........ ............ ................ ...........।
4. ......... ............... ..............।
5. ......... ............... .............. ..............।
6. ......... ............... ..............।
7. ......... ............... ..............।
8. ......... ............... ..............।
9. ........ ............ ................ ........ ...........।
10. ........ ............ ................ ........ ........ ...........।
11. ......... ............... ........ ..............।
12. ......... ............... ........ ..............।
13. ........ ............ ................ ........ ........... ..............।
14. ........ ............ ................ ........ ...........।

## अभ्यासः – 284

सप्तसु विभक्तिषु प्रयोगाः

✍ **शब्दानाम् उचितानि विभक्तिरूपाणि लिखित्वा कथां पुनः लिखन्तु–**
[ शब्दों के उचित विभक्ति–रूपों को लिखकर कथा को पुनः लिखिए। Rewrite the story by using proper *Vibhakti* forms of the words. ]

उदा० – 1. **एक** **वृद्ध** आसीत्।
2. **तत्** चत्वारः **पुत्र** आसन्।
3. ते **अतीव** **अलस** आसन्।
4. **अलस** **पुत्र** दृष्ट्वा वृद्धः कदाचित् **एक** **उपाय** चिन्तितवान्।
5. **तत्** **पुत्र** आहूय उक्तवान् **क्षेत्र** **धन** अस्ति।
6. कुत्र अस्ति इति **अस्मद्** विस्मृतवान्।
7. **भवत्** अन्विष्य स्वीकुर्वन्तु।
8. **सुख** जीवन्तु इति।
9. **पुत्र** **सन्तोष** **क्षेत्र** **खनन** कृतवन्तः।
10. कुत्रापि धनं न लब्धम्।
11. **खातभूमि** **धान्य** **वपन** कृत्वा **कृषि** कृतवन्तः।
12. **जनक** **आशय** ज्ञात्वा **तत्** **सन्तुष्ट** अभवन्।
13. अनन्तरम् **आलस्य** परित्यज्य **सुख** जीवितवन्तः।

उदा० – 1. ..एकः... .......वृद्धः..... .......आसीत्.।
2. ........ ............... .............. ..............।
3. ........ ............... .............. ..............।
4. ........ ........... ........ ........ ........ ........ ........ ........।
5. ........ ............ ................ ........... ........ ........ ........।
6. ........ ............ ................ ........... ........।
7. ........ ............... ..............।
8. ........ ............... ..............।
9. ........ ............ ................ ........... ...........।
10. ........ ............... .............. ...........।
11. ........ ............ ................ ........... ........... ...........।
12. ........ ............ ................ ........... ........... ...........।
13. ........ ............ ................ ........... ...........।

## अभ्यासः – 285

सम्भाषणे समुचितं द्वितीयं वाक्यं मञ्जूषातः लिखन्तु–

1. नन्दिनि, किं भवत्याः दर्शनम् एव नास्ति।
   ..................................................... ।
2. ग्रामे कः विशेषः आसीत् ?
   ..................................................... ।
3. भवत्याः जनकस्य षष्टिवर्षाणि वा ?
   ..................................................... ।
4. किं किम् आसीत्।
   ..................................................... ।
5. केषां सम्माननं कृतवन्तः ?
   ..................................................... ।
6. युक्तं कृतम्। निःस्वार्थभावेन समाजसेवायां निमग्नानां सम्माननकर्तारः विरलाः एव। कदा आगतवती ग्रामतः ?
   ..................................................... ।
7. तथापि दर्शनं न अभवत्।
   ..................................................... ।
8. इदानीं भवत्याः पुत्रः कथम् अस्ति? वैद्यं दर्शितवती वा ?
   ..................................................... ।
9. घर्मस्य आधिक्येन तथा जातं स्यात्।
   ..................................................... ।
10. आगच्छतु, गृहं गच्छाव।
    ..................................................... ।
11. तर्हि श्वः आगच्छतु।
    ..................................................... ।

आम्।
आम्, ग्रामं गतवती आसम्।
सायं च केषाञ्चन सम्माननम् आसीत्।
ये समाजसेवां निस्स्वार्थभावनया कुर्वन्तः सन्ति, तेषां केषाञ्चन सम्माननम् आसीत्।
मम जनकस्य षष्ट्यब्धिसमारम्भः आसीत्।
गतसप्ताहे एव आगवती।
मम पुत्रस्य अनारोग्यम् आसीत्।
आम्।
वातावरणस्य प्रभावः इत्येव उक्तं वैद्येन।
नैव इदानीं गृहं गन्तव्यम्।
तदर्थम् प्रातः पूजाहोमादिकं च आसीत्।
अस्तु श्वः सायम् अवश्यम् आगमिष्यामि।

# अभ्यासः – 286

संख्याभ्यासः

✍ **संख्याम् अक्षरैः लिखन्तः कथां पूरयन्तु–**
[ संख्या को अक्षरों में लिखते हुए कथा की / घटना की पूर्ति कीजिए। Complete the story / event by writing words in place of numbers. ]

I. ....... (१) पण्डितः आसीत्। तस्य ......... (३) पुत्राः आसन्। तेषु ......... (१) पुत्रः मन्दमतिः। एकदा पण्डितः तम् आहूय अवदत् – ''आपणं गत्वा ......... (५) नारिकेलफलानि, ......... (१२) कदलीफलानि च आनयतु''। तदर्थम् ......... (१) स्यूतम् ......... (१) कूपीं च नयतु इति। मन्दमतिः आपणं गत्वा उक्तवान् ........ (५) स्यूतान् ......... (१२) कूपीः ......... (१) नारिकेलफलं ......... (१) कदलीफलं च ददातु इति। आपणिकः तथैव दत्तवान्।

II विश्वनाथस्य गृहे बहवः जनाः सन्ति। तस्य ......... (१) सहोदरः वित्तकोषे कार्यं करोति। ......... (१) सहोदरी उट्टङ्किका। ......... (२) सहोदरौ यन्त्रागारे कार्यं कुरुतः। ......... (२) सहोदर्यौ पत्रालये कार्यं कुरुतः। ......... (१) सहोदरः विद्यालयं गच्छति। तस्य ......... (२) पुत्रौ महाविद्यालयं गच्छतः। ......... (२) पुत्र्यौ पञ्चमकक्ष्यायां पठतः। तस्य गृहे ........ (१) कर्मकरी कार्यं करोति।

## [ 6.3 तृतीयः पाठः ]

# श्लोकाभ्यासः

**वर्तमाने**

**6.3.1 क्रियापदश्लोकाः**

**अधोलिखितपद्यानि पठन्तु। वर्तमानकालिकक्रियापदानि रेखाङ्कितानि कुर्वन्तु–**
[ निम्नलिखित श्लोकों को पढिये। वर्तमान काल की क्रियाओं को रेखाङ्कित कीजिए। Read the following verses. Underline the verbs in present tense. ]

हृष्यत्येको मणिं लब्ध्वा कुप्यत्येको ह्यलाभतः।
पश्यत्येव विरक्तोऽत्र न हृष्यति न कुप्यति।

*अर्थः–* अमूल्यं मणिं प्राप्य एकः सन्तुष्टः भवति। 'तम् अहं न लब्धवान्' इति अपरः कोपं प्राप्नोति। किन्तु वैराग्ययुक्तः तं मणिं दृष्ट्वा अपि न सन्तोषं प्राप्नोति न वा कोपम्।

मतयो यत्र गच्छन्ति तत्र गच्छन्ति वानराः।
शास्त्राणि यत्र गच्छन्ति तत्र गच्छन्ति वै नराः।।

*अर्थः–* मनः यत्र गच्छति तत्र ये गच्छन्ति ते वानराः। शास्त्राणि विवेकः वा यत्र गच्छन्ति तत्र ये गच्छन्ति ते एव नराः = मनुष्याः। वानर-नरयोः एषः एव भेदः।

**अभ्यासः – 287**

**उपर्युक्तश्लोकयोः अर्थं पठित्वा अधः दत्तानां प्रश्नानाम् उत्तरं लिखन्तु–**
[ ऊपर कहे गए श्लोकों के अर्थ को समझकर नीचे दिए गए प्रश्नों के उत्तर लिखिए। Answer the following questions based on the above given verses. ]

1. किं प्राप्य एकः हृष्यति ?
   ............. ............. ............. .......... ...........।
2. किमर्थम् अपरः कुप्यति ?
   .......... .......... ....... .................. .......... .......... ................।
3. विरक्तः किं करोति ?
   .............. .................. ........ ........ .......... ..........।
4. वानराः के ?
   .......... ........ .............. ........ ........ .......... .......... ............।
5. नराः के ?
   .......... ........ .............. ........ ........ .......... .......... ............।

काव्यं करोमि न हि चारुतरं करोमि
यत्नात् करोमि यदि चारुतरं करोमि।
भूपालमौलिमणिमण्डितपादपीठ !
हे साहसाङ्क ! कवयामि वयामि यामि।

*अर्थः–* कश्चन कुविन्दः भोजमहाराजं वदति–"अहं विशेषप्रयत्नं विना सामान्यकाव्यं रचयितुं शक्नोमि। यदि विशेषप्रयत्नं करोमि तर्हि उत्तमकाव्यं रचयितुं शक्नोमि। हे महाराज ! अहं काव्यं करोमि, वयामि = वस्त्रनिर्माणं करोमि। यामि = गच्छामि" इति।

वने चरामो वसु चाहरामो
नदीस्तरामो न भयं स्मरामः।
इतीरयन्तोऽपि वने किराताः
मुक्तिं गताः रामपदानुषङ्गात्।

*(वसु = ऐश्वर्यम्, आहरामः = अपहरामः, ईरयन्तः = वदन्तः, अनुषङ्गः = सम्बन्धः)*

*अर्थः–* 'वयं वने **सञ्चरामः**, ऐश्वर्यं बलात् **आहरामः**, नदीः **तरामः**, भयं न **स्मरामः**' इति वनवासिनः किराताः वदन्ति। तेषां वाक्येषु 'रामः' इति शब्दः अनायासम् आगतः। तस्य कारणतः एव ते मुक्तिं प्राप्तवन्तः। एवम् अस्ति रामनाममहिमा।

## अभ्यासः – 288

✍ उपर्युक्तयोः श्लोकयोः अर्थं पठित्वा अधस्तनप्रश्नानाम् उत्तराणि लिखन्तु–
[ऊपर कहे गए श्लोकों के अर्थ को समझकर अधोलिखित प्रश्नों के उत्तर दीजिए। Please read the above verses and answer the following questions.]

1. कुविन्दः काव्यं कर्तुं शक्नोति किम् ?
........ .......... ........ .......... ...........।
2. उत्तमकाव्यं रचयितुं सः कदा शक्नोति ?
........ .......... ........ .......... ...........।
3. किरातैः उच्चारितानि चत्वारि क्रियापदानि कानि ?
........ .......... ........ .......... ........... ...........।
4. किराताः कस्मात् कारणात् मुक्तिं गताः ?
........ .......... ........ .......... ........... ...........।

**आज्ञाद्यर्थेषु**

**अधोलिखितानि पद्यानि पठित्वा आज्ञार्थकक्रियापदानि रेखाङ्कितानि कुर्वन्तु–**
[ निम्नलिखित पदों को पढ़कर आज्ञार्थक क्रियाओं को रेखाङ्कित कीजिए। Read the following verses and underline the verbs in imperative. ]

त्यज दुर्जनसंसर्गं भज साधुसमागमम्।
कुरु पुण्यमहोरात्रं स्मर नाम हरेः सदा।।

*(संसर्गः = सम्पर्कः; समागमः = सहवासः, संयोगः)*

*अर्थः*– दुष्टजनानां सहवासं मा कुरु। सज्जनानां सहवासं कुरु। अहोरात्रं पुण्यकार्याणि कुरु। सर्वदा देवस्य नामस्मरणं कुरु।

धर्मं चरत माऽधर्मं सत्यं वदत माऽनृतम्।
दीर्घं पश्यत मा ह्रस्वं परं पश्यत माऽपरम्।।

*अर्थः*– यूयं धर्मम् आचरत। अधर्मं न आचरत। यूयं सत्यं वदत। असत्यं न वदत। यूयं दीर्घलक्ष्यं पश्यत। अल्पलक्ष्यं मा पश्यत। यूयं श्रेष्ठं तत्त्वं पश्यत। क्षुद्रं तत्त्वं न पश्यत।

## अभ्यासः – 289

**उपर्युक्तश्लोकयोः अर्थं पठित्वा अधः दत्तेषु वाक्येषु रिक्तस्थानानि पूरयन्तु–**
[ ऊपर कहे गए श्लोकों के अर्थ को समझकर नीचे दिए गए वाक्यों के रिक्त स्थानों की पूर्ति कीजिए। please complete the following sentences on the basis of above given verses. ]

1. ................ ............... मा कुरु। ............. सहवासं कुरु।
2. अहोरात्रं ............... कुरु।
3. सर्वदा .......... ................ कुरु।
4. यूयं ........... आचरत। ............. न .............।
5. यूयं ............. वदत। ............. न ...............।
6. यूयं ............. पश्यत। .............. मा ..............।
7. यूयं ....... ....... पश्यत। ....... ....... न ...............।

सर्वे भवन्तु सुखिनः
सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु
मा कश्चित् दुःखभाग् भवेत् ।।

*(निरामयाः = रोगरहिताः, स्वस्थाः, भद्रम् = मङ्गलम्, दुःखभाक् = दुःखयुक्तः)*

*अर्थः* – लोके सर्वे जनाः सुखयुक्ताः भवन्तु । सर्वे आरोग्ययुक्ताः भवन्तु । सर्वे मङ्गलानि पश्यन्तु । कोऽपि दुःखं न प्राप्नोतु ।

अपुत्राः पुत्रिणः सन्तु
पुत्रिणः सन्तु पौत्रिणः ।
अधनाः सधनाः सन्तु
सज्जनाः सन्तु निर्भयाः ।।

*(पुत्रिणः = पुत्रयुक्ताः, अधनाः = निर्धनाः, सधनाः = धनिकाः)*

*अर्थः* – लोके पुत्ररहिताः पुत्रं प्राप्नुवन्तु । ये पुत्रवन्तः सन्ति ते पौत्रान् प्राप्नुवन्तु । निर्धनाः धनिकाः भवन्तु । सज्जनाः भयरहिताः भवन्तु ।

## अभ्यासः – 290

✍ **उपरितनश्लोकयोः अर्थं पठित्वा अधः भागद्वये दत्तानि पदानि योग्यक्रमेण योजयन्तु । ततः सिद्धानि वाक्यानि पुनः लिखन्तु–**

[ दो भागों में दिए गए अधोनिर्दिष्ट पदों को उपरि लिखित श्लोकों के अर्थ के आधार पर उचित क्रम से मिलाइए एवं समायोजित वाक्यों को पुनः लिखिए । Match the words given in column अ and आ on the basis of the meanings of the above given verses and re-write them. ]

| | अ | + | आ |
|---|---|---|---|
| I. 1. | सर्वे भवन्तु | | भवन्तु |
| 2. | दुःखयुक्ताः | | पश्यन्तु |
| 3. | स्वस्थाः | | सुखिनः |
| 4. | मङ्गलम् | | मा भवन्तु |

1. ...सर्वे..... .........भवन्तु... ..सुखिनः... ।
2. ............ ......... ............... ।
3. ...सर्वे... ............ .............. ।
4. .......... .............. ।

| | अ | + | आ |
|---|---|---|---|
| II. | अपुत्राः | | भीतिरहिताः |
| | पुत्रिणः | | धनिकाः |
| | अधनाः | | पुत्रिणः |
| | सज्जनाः | | पौत्रिणः |

1. ............. ........... सन्तु ।
2. ............. ........... सन्तु ।
3. ............. ........... सन्तु ।
4. ............. ........... सन्तु ।

**भविष्यकाले**

✍ **अधोलिखितं पद्यं पठित्वा भविष्यकालिकक्रियापदानि रेखाङ्कितानि कुर्वन्तु—**

[ निम्नलिखित पद्यों को पढ़कर भविष्यकाल की क्रियाओं को रेखाङ्कित कीजिए। Read the following verses and underline the words in future tense. ]

रात्रिर्गमिष्यति भविष्यति सुप्रभातं
भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः।
इत्थं विचिन्तयति कोषगते द्विरेफे
हा हन्त, हन्त ! नलिनीं गज उज्जहार।।

*(भास्वान् = सूर्यः, श्रीः = शोभा, इत्थम् = एवं प्रकारेण, द्विरेफः = भ्रमरः, उज्जहार = उत्खातवान्, नाशितवान्, अपहृतवान्)*

कश्चन भ्रमरः मधु पिबन् कमले उपविष्टः आसीत्। यदा सूर्यास्तः जातः तदा कमलं मुकुलितं जातम्। कमलस्य अन्तः भ्रमरः बद्धः जातः। तादृशः भ्रमरः "रात्रिः अपगता भविष्यति। प्रभातं च भविष्यति। ततः सूर्योदयः भविष्यति। कमलं च विकसिष्यति। ततः अहम् ............." इति यावत् चिन्तयन् आसीत् तदा कश्चन गजः आगत्य तत् भ्रमरयुक्तं कमलम् एव अनाशयत्। एवं स्वप्नं पश्यन् एव भ्रमरः पञ्चत्वं गतः। मनुष्यस्य अपि जीवने एवं भवति खलु कदाचित् ?

**क्त्वा—**

अकृत्वा परसन्तापम् अगत्वा खलनम्रताम्।
अनुत्सृज्य सतां वर्त्म यत् स्वल्पम् अपि तद् बहु।।

*(परः = अन्यः, खलः = दुर्जनः, अनुत्सृज्य = अत्यक्त्वा, सतां = सज्जनानां, वर्त्म = मार्गः)*

*अर्थः–* परपीडनम् अकृत्वा दुष्टानां आश्रयम् अप्राप्य, सज्जनानां वर्त्म अत्यक्त्वा जीवनं यापयन्तु। एवं कृते यत् स्वल्पम् अपि फलं प्राप्यते तद् एव बहु मन्तव्यम्। यतः तदेव चिरस्थायि शुभपरिणामकरं च भवति।

## तुमुन्

उपकर्तुं प्रियं वक्तुं
कर्तुं स्नेहमकृत्रिमम् ।
सज्जनानां स्वभावोऽयं
केनेन्दुः शिशिरीकृतः ।।

*(इन्दुः = चन्द्रः, शिशिरीकृतः = शीतलीकृतः)*

*अर्थः–* सज्जनाः विशेषकारणं विना अपि उपकारं कुर्वन्ति । प्रियवचनानि वदन्ति, निर्व्याजस्नेहं च कुर्वन्ति । एषः तेषां स्वभावः अस्ति । इन्दुः न हि केनापि शीतलीकृतः । स तु स्वभावतः एव शीतलः भवति ।

### अभ्यासः – 291

**उपयुर्क्तश्लोकानाम् अर्थं पठित्वा अधः दत्तानां प्रश्नानाम् उत्तराणि लिखन्तु–**
[उपर्युक्त श्लोकों के अर्थ समझकर अधोनिर्दिष्ट प्रश्नों के उत्तर लिखिए । Please read the above given verses and answer the following questions.]

1. भ्रमरः कुत्र आसीत् ?

   ............ ............ ................. ।

2. गजः किम् अखादत् ?

   ................. ................. .................... .................... ।

3. केषां मार्गं न त्यजेम ?

   ................. ................. ........... .......... ।

4. सज्जनाः कीदृशं स्नेहं कुर्वन्ति ?

   ............ ............ ................. ।

5. सज्जनाः कीदृशानि वचनानि वदन्ति ?

   ................. ................. .................... ।

## [ 6.3.2 विभक्तिश्लोकाः ]

### 6.3.2.1 द्वितीया

**अधोलिखितानि पद्यानि पठित्वा द्वितीयान्तानि पदानि रेखाङ्कितानि कुर्वन्तु–**

[ निम्नलिखित पद्यों को पढ़कर द्वितीया विभक्ति वाले पदों को रेखाङ्कित कीजिए। Read the following verses and underline the words in second case - ending. ]

वसुदेवसुतं देवं कंसचाणूरमर्दनम्।
देवकीपरमानन्दं कृष्णं वन्दे जगद्गुरुम्।।

*(वन्दे = नमामि, नमस्करोमि)*

*अर्थः–* कृष्णः वसुदेवस्य पुत्रः। देवक्याः आनन्दस्य वर्धकः। कंसचाणूरनामकयोः राक्षसयोः संहारकः। सः जगद्गुरुः अपि। तं कृष्णम् अहं नमामि।

रामं स्कन्दं हनूमन्तं वैनतेयं वृकोदरम्।
शयने यः स्मरेन्नित्यं दुःस्वप्नस्तस्य नश्यति।।

*(वैनतेयः = गरुडः, वृकोदरः = भीमः, स्कन्दः = षण्मुखः)*

*अर्थः–* यः शयनसमये रामं, षण्मुखम्, आञ्जनेयं, गरुडं, भीमं च स्मरति तस्य दुःस्वप्नाः नश्यन्ति।

अच्युतं केशवं रामनारायणं
कृष्णदामोदरं वासुदेवं हरिम्।
श्रीधरं माधवं गोपिकावल्लभं
जानकीनायकं रामचन्द्रं भजे।।

*(भजे = भजामि)*

श्रीकृष्णस्य नामानि बहूनि – अच्युतः, केशवः, रामः, नारायणः, कृष्णः, दामोदरः, वासुदेवः, हरिः, श्रीधरः, माधवः, गोपीवल्लभः, जानकीपतिः, रामचन्द्रः, इत्यादीनि। तादृशं कृष्णम् अहं भजामि।

## अभ्यासः – 292

✍ **'द्वितीया' सम्बद्धान् श्लोकान् पठित्वा अधस्तनप्रश्नानाम् उत्तराणि लिखन्तु–**
[ 'द्वितीया' विभक्ति से सम्बद्ध श्लोकों को पढ़कर अधोलिखित प्रश्नों के उत्तर दीजिए। Please answer the following questions by going through the verses related to second case - ending. ]

1. कृष्णः कस्य पुत्रः ?

   ................ ................ ................... ।

2. कृष्णः कयोः मर्दनः ?

   ................ ................ ................... ।

3. कृष्णः कस्याः आनन्दवर्धकः ?

   ................ ................ .......... .......... ।

4. रामस्कन्दादीनां स्मरणतः के नश्यन्ति ?

   ............ ............ ................ ................ ।

5. त्वं कं भजसि ?

   ................ ................ ................... ।

### 6.3.2.2 तृतीया

✍ **अधोलिखितानि पद्यानि पठित्वा तृतीयान्तपदानि रेखाङ्कितानि कुर्वन्तु–**
[ निम्नलिखित पद्यों को पढकर तृतीयान्त पदों को रेखाङ्कित कीजिए। [ Read the following verses and underline the words ending in third case - ending. ]

गन्धेन हीनं सुमनं न शोभते,
दन्तैर्विहीनं वदनं न भाति।
सत्येन हीनं वचनं न दीप्यते
पुण्येन हीनः पुरुषो जघन्यः।।

*(न शोभते = न भाति = न दीप्यते = न शोभां ददाति, जघन्यः - निन्दायोग्यः, सुमनं = पुष्पम्)*

*अर्थः-* गन्धः नास्ति चेत् पुष्पस्य शोभा नास्ति। दन्ताः न सन्ति चेत् मुखस्य शोभा नास्ति। सत्ययुक्तता नास्ति चेत् वचनस्य शोभा नास्ति। यः पुण्यसम्पादनं न करोति तस्यापि शोभा नास्ति।

**दम्भेन धर्मं कपटेन मैत्रीं**
**सुखेन विद्यां परुषेण नारीम्।**

**परोपतापेन समृद्धभावं**
**वाञ्छन्ति ये व्यक्तमपण्डितास्ते।**

*(दम्भेन = बाह्याडम्बरेण, परुषेण - कठोरतागुणेन, उपतापः = पीडनम्, व्यक्तम् = स्पष्टतया)*

*अर्थः-* दम्भेन बाह्याडम्बरेण ये धर्मं पुण्यम् उपार्जितुम् इच्छन्ति, कपटेन = छलेन ये मैत्रीं निर्वाहयितुम् इच्छन्ति, क्लेशं = परिश्रमं विना सुखेन एव ये विद्याम् उपार्जितुम् इच्छन्ति, परुषेण = कठोरत्वेन ये नारीं वशीकर्तुम् इच्छन्ति, परपीडनेन = दुर्बलानां दरिद्राणां वा शोषणेन ये समृद्धिं वाञ्छन्ति ते निश्चयेन अपण्डिताः मूर्खाः एव सन्ति।

*विना-*

विना शीलेन वनिता
वाग्मिता विद्यया विना।
विनयेन विना वित्तं
मास्तु कस्यापि देहिनः।।

*(वित्तं = धनम्, देहिनः = मानवस्य)*

*अर्थः-* शीलेन विना स्त्री न शोभते। विद्यया विना वक्तृत्वं न शोभते। विनयेन विना सम्पत्तिः न शोभते। अतः शीलविहीना स्त्री, विद्याविहीना वक्तृता, विनयविहीनं धनं च कस्यापि जनस्य न भवतु।

*सह-* पञ्चभिः सह गन्तव्यं स्थातव्यं पञ्चभिः सह।
पञ्चभिः सह वक्तव्यं न दुःखं पञ्चभिः सह।।

*अर्थः-* यात्रादिप्रसङ्गे बहुभिः जनैः सह गन्तव्यम्। बहुभिः सह वासः करणीयः। बहुभिः सह सम्भाषणं परामर्शादिकं करणीयम्। एवं बहुभिः सह मिलित्वा कार्यकरणेन दुःखं न भवति। (अस्मिन् श्लोके पञ्च इति सङ्ख्या बहुलतां सूचयति।)

## अभ्यासः – 293

✍ **'तृतीया' सम्बद्धश्लोकान् पठित्वा अधस्तनप्रश्नानाम् उत्तराणि लिखन्तु–**
[ तृतीया विभक्ति से सम्बद्ध श्लोकों को पढ़कर अधोलिखित प्रश्नों के उत्तर दीजिए। Please answer the following questions by going through the verses related to third case - ending. ]

1. कीदृशं पुष्पं न शोभते ?

   .................. .............. .............. .............. ......... ।

2. कीदृशं वदनं न भाति ?

   ................... ................... .............. .................. ।

3. कीदृशः पुरुषः निन्द्यः ?

   ................... ................... .............. .................. ।

4. ये कपटेन मैत्रीं वाञ्छन्ति ते के ?

   ................... ................... .............. .................. ।

5. वक्तृत्वं कया विना न शोभते ?

   .............. .................. .............. ......... ................... ।

6. सम्पत्तिः केन विना न शोभते ?

   .................. .............. ........ ......... .......... ।

7. किं बहून् न वदेम ?

   .................. .............. ........ .................. ।

### 6.3.2.3 चतुर्थी

✍ **अधोलिखित-पद्यानि पठित्वा चतुर्थ्यन्तपदानि रेखाङ्कितानि कुर्वन्तु–**
[ निम्नलिखित पद्यों को पढकर चतुर्थ्यन्त पदों को रेखाङ्कित कीजिए। [ Read the following verses and underline the words in fourth case - ending. ]

रामाय रामभद्राय रामचन्द्राय वेधसे।
रघुनाथाय नाथाय सीतायाः पतये नमः।।

*(वेधसे = सृष्टिकारकाय)*

*अर्थः–* रामाय नमः। रामभद्राय नमः। रामचन्द्राय नमः। संसारस्य कारकाय रामाय नमः। रघूणां नाथाय नमः। प्रभुरूपाय नमः। सीतायाः पतये नमः।

**विद्या विवादाय धनं मदाय**
**शक्तिः परेषां परिपीडनाय।**
**खलस्य साधोर्विपरीतमेतत्**
**ज्ञानाय दानाय च रक्षणाय।।**

*(परेषाम् = अन्यजनानाम्, खलस्य = दुर्जनस्य विपरीतम् = विरुद्धम्)*

*अर्थः–* दुर्जनस्य विद्या विवादाय भवति, धनं मदाय भवति, शक्तिः परेषां परिपीडनाय भवति। किन्तु सज्जनस्य विद्या ज्ञानाय, धनं दानाय, शक्तिः परेषां रक्षणाय च भवति। सज्जनदुर्जनयोः एषः भेदः।

**नागेन्द्रहाराय त्रिलोचनाय**
**भस्माङ्गरागाय महेश्वराय।**
**नित्याय शुद्धाय दिगम्बराय**
**तस्मै 'न'-काराय नमः शिवाय।।**

शिवः सर्पं हाररूपेण धृतवान्। सः त्रिनेत्रः। सः भस्मलेपनं करोति। सः महेश्वरः नित्यः शुद्धः च। सः दिगम्बरः अपि। 'ओं नमः शिवाय' इति वाक्ये यः 'न' कारः अस्ति, तेन एव निर्दिष्टं शिवस्य स्वरूपं सङ्केतितं भवति। तादृशाय शिवाय नमः।

## अभ्यासः – 294

✍ **'चतुर्थी' सम्बद्धश्लोकानाम् अर्थं पठित्वा अधस्तनप्रश्नानाम् उत्तरं लिखन्तु–**

[ चतुर्थी विभक्ति से सम्बद्ध श्लोकों का अर्थ समझकर अधोलिखित प्रश्नों का उत्तर दीजिए। please answer the following questions by going through the verses related to fourth case - ending. ]

1. रामः कस्याः पतिः ? केषां नाथः ?
........ .............. ..............। .............. ..............।
2. दुर्जनस्य विद्या किन्निमित्तं भवति ?
.............. .............. .............. ..............।
3. सज्जनस्य शक्तिः किन्निमित्तं भवति ?
.............. .............. .............. ..............।
4. शिवः सर्पं केन रूपेण धृतवान् अस्ति ?
.............. ........... .............. .............. ............. ।
5. शिवस्य कति लोचनानि ?
.............. .......... ......................।

### 6.3.2.4 पञ्चमी

✍ **अधोलिखितानि पद्यानि पठित्वा पञ्चम्यन्तपदानि रेखाङ्कितानि कुर्वन्तु–**

[ निम्नलिखित पद्यों को पढ़कर पञ्चम्यन्त पदों को रेखाङ्कित कीजिए। [ Please read the following verses and underline the words in fifth case - ending. ]

मानाद्वा यदि वा क्रोधात्
लोभाद्वा यदि वा भयात्।
यो न्यायमन्यथा ब्रूते
स याति नरकं नरः।।

*(ब्रूते = वदति, याति = गच्छति)*

यः मानवः अभिमानकारणतः, क्रोधकारणतः, लोभकारणतः, भयकारणतः वा न्यायम् अन्यायरूपेण वदति, सः नरकं गच्छति।

धर्मादर्थात् भयात् कामात् कारुण्यादिति भारत।
दानं पञ्चविधं ज्ञेयम् इति विज्ञा ब्रुवन्ति हि।।

जनाः प्रायः धर्मकारणतः, स्वलाभकारणतः, भयकारणतः, विशेषेच्छाकारणतः, दयाकारणतः च दानं कुर्वन्ति इति पण्डिताः वदन्ति।

**विद्या ददाति विनयं विनयाद्याति पात्रताम्।**
**पात्रत्वाद्धनमाप्नोति धनाद्धर्मं ततः सुखम्।।**

जनाः विद्याभ्यासतः विनयं प्राप्नुवन्ति। विनयात् योग्यतां प्राप्नुवन्ति। योग्यतातः धनं प्राप्नुवन्ति। धनात् धर्माचरणसामर्थ्यं प्राप्नुवन्ति। ततः सुखं प्राप्नुवन्ति।

## अभ्यासः – 295

**'पञ्चमी' सम्बद्धश्लोकानाम् अर्थं पठित्वा अधस्तनवाक्येषु रिक्तस्थानानि पूरयन्तु–**

[पञ्चमी विभक्ति से सम्बद्ध श्लोकों का अर्थ समझकर अधोलिखित वाक्यों के रिक्त स्थानों की पूर्ति कीजिए। Please read the meanings of the verses related to fifth case - ending and fill in the blanks in the following sentences.]

1. मानात्, ............, लोभात्, .............. च केचन न्यायम् अन्यायरूपेण वदन्ति।
2. धर्मात्, ............, भयात्, ................, ............. इति दानं पञ्चविधम्।
3. विद्यातः ............, विनयतः .............., पात्रत्वात् ............... च जनाः प्राप्नुवन्ति।
4. धनात् ................ धर्मात् ................ च जनाः प्राप्नुवन्ति।

### 6.3.2.5 षष्ठी

**अधोलिखितानि पद्यानि पठित्वा षष्ठ्यन्तपदानि रेखाङ्कितानि कुर्वन्तु–**

[निम्नलिखित पद्यों को पढ़कर षष्ठी विभक्ति वाले पदों को रेखाङ्कित कीजिए। Read the following verses and underline the words in sixth case - ending.]

**पुण्यस्य फलमिच्छन्ति पुण्यं नेच्छन्ति मानवाः।**
**फलं पापस्य नेच्छन्ति पापं कुर्वन्ति यत्नतः।।**

जनाः पुण्यस्य फलम् इच्छन्ति। किन्तु पुण्यकार्याणि न कुर्वन्ति। पापस्य फलं तु न इच्छन्ति। किन्तु व्यवहारेण पापम् एव आचरन्ति।

आदानस्य प्रदानस्य कर्तव्यस्य च कर्मणः।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम्।।

*(आदानम् = विद्याग्रहणम्, क्षिप्रम् – शीघ्रम्)*

विद्यायाः ग्रहणम् धनस्य दानम्, करणीयं कर्म च यदि शीघ्रं न कुर्मः तर्हि कालः तत् नाशयति।

पापानां शोधकं नित्यं परानन्दस्य बोधकम्।
रोचकं चित्तवृत्तीनां भजध्वं नाम मङ्गलम्।।

*(भजध्वम् = भजतु)*

भगवन्नाम पापानां निवारकम् अस्ति। तत् परमानन्दं बोधयति। मनसि रुचिम् उत्पादयति। अतः तत् मङ्गलकरं भगवन्नाम सदा उच्चारयन्तु।

## अभ्यासः – 296

✍ **'षष्ठी' सम्बद्धश्लोकानाम् अर्थं पठित्वा अधस्तनप्रश्नानाम् उत्तराणि लिखन्तु–**
[ षष्ठी विभक्ति से सम्बद्ध श्लोकों के अर्थ समझकर अधोलिखित प्रश्नों के उत्तर दीजिए। Please read the meanings of the following verses and answer the following questions. ]

1. मानवाः कस्य फलम् इच्छन्ति ?

   .................. ............. ............ ..................।

2. मानवाः प्रयत्नेन किम् आचरन्ति ?

   .................. .................. .................. ..................।

3. करणीयं कार्यं शीघ्रं न कुर्मः चेत् किं भवति ?

   .......... ......... ........ ....... .......... .......... ...... ..........।

4. भगवन्नाम केषां निवारकम् अस्ति ?

.................. .................. .................. ..................।

5. भगवन्नाम किम् उत्पादयति ?

.................. .................. ......................।

**6.3.2.6 सप्तमी**

**अधोलिखितानि पद्यानि पठित्वा सप्तम्यन्तपदानि रेखाङ्कितानि कुर्वन्तु–**

[ निम्नलिखित पद्यों को पढ़कर सप्तम्यन्तपदों को रेखाङ्कित कीजिए। Read the following verses and underline the words in seventh case - ending. ]

**शैले शैले न माणिक्यं मौक्तिकं न गजे गजे[1]।**
**सज्जनाः न हि सर्वत्र चन्दनं न वने वने।।**

सर्वेषु पर्वतेषु माणिक्यानि न भवन्ति। विशिष्टेषु केषुचित् पर्वतेषु तानि भवन्ति। सर्वेषां गजानां कुम्भस्थले मौक्तिकं न भवति। केषाञ्चित् एव गजानां कुम्भस्थले तत् भवति। सज्जनाः सर्वत्र न भवन्ति, केषुचित् एव प्रदेशेषु भवन्ति। चन्दनवृक्षः अपि सर्वेषु वनेषु न भवति। केषुचित् एव अरण्येषु भवति।

**न देवो विद्यते काष्ठे न पाषाणे न मृण्मये।**
**भावे हि विद्यते देवः तस्मात् भावो हि कारणम्।।**

देवः काष्ठमूर्तौ, पाषाणमूर्तौ, मृन्मयमूर्तौ वा वस्तुतः न भवति। यस्य यत्र देवबुद्धिः तत्र सः देवं पश्यति। वयं पाषाणमूर्तौ देवं पश्यामः चेत् तां मूर्तिं देवमूर्तिं भावयामः। एवमेव अन्यमूर्तिविषये अपि। अतः अस्माकं भावना एव मुख्या एतद्विषये।

**परनिन्दासु पाण्डित्यं स्वेषु कार्येष्वनुद्यमः।**
**प्रद्वेषश्च गुणज्ञेषु पन्थानो ह्यापदां त्रयः।।**

यः अन्यजनानां निन्दने पाण्डित्यं दर्शयति, यः स्वकर्तव्यानां विषये अनादरं प्रकटयति, गुणयुक्तजनान् प्रति द्वेषं यः करोति सः जीवने विपत्तिं सम्मुखीकरोति। एते त्रयः अपि अंशाः विपत्कारकाः।

---

1. **'गजमस्तके मौक्तिकं भवति' एतत् कथनं किंवदन्तीरूपम्** अस्ति, न तु वास्तविकम्।

## अभ्यासः – 297

✍ **अधस्तनप्रश्नानाम् उत्तराणि लिखन्तु–**
[ अधोलिखित प्रश्नों के उत्तर दीजिए। Please answer the following questions . ]

1. माणिक्यानि कुत्र न भवन्ति ?

   ................ .............. .............. ............ ...................।

2. चन्दनं कुत्र भवति ?

   ................ .............. .............. ............ ...................।

3. देवः केषु अस्ति ?

   .......... ................. ....................।

4. परनिन्दासु पाण्डित्यं यः प्रदर्शयति तस्य किं भवति ?

   ............. ............. ........ ............ ........ .... .... .........।

## 6.4 पत्रलेखनम्

जीवने पत्राणां महत्वं कः न जानाति ? प्रतिदिनं वयं पत्रस्य आवश्यकताम् अनुभवामः। पारिवारिक–वृत्तस्य आदानप्रदानाय, निमन्त्रण–दानाय विविधेषु अवसरेषु शुभकामनादि–सन्देशानां प्रेषणाय च प्रायेण वयं पत्र–व्यवहारं कुर्मः।

न केवलम् एतदेव, अपि तु विविधेषु व्यवसायेषु कार्यालयेषु च विविधानि प्रयोजनानि उद्दिश्य वयं विविधप्रकारकाणि पत्राणि लिखामः। इत्थं च पत्रस्य द्विविधं स्वरूपं भवति।

(i) वैयक्तिकम्।
(ii) व्यावसायिकं कार्यालयीयं वा।

### वैयक्तिक–पत्रस्य स्वरूपम्

(1) ............

(2) ........................
........................
........................

(3) ........................

(4) ........................

(5) ..........................................।

(6) ....................................................................
....................................................................
....................................................................।

(7) ........................

(8) ........................
........................
........................

❖ **संख्याभिः निर्दिश्यमानाः वर्ण्यविषयाः–**

1. माङ्गलिक–पदम्।
2. स्थानं दिनाङ्कः च।
3. सम्बोधनम्।
4. नमस्कारः अभिवन्दनम् आशीर्वचनं वा।
5. कुशलसूचना।
6. सन्देशः।
7. उपसंहृतिः।
8. प्रेषकस्य परिचयः हस्ताक्षरं च।

### 6.4.1 वैयक्तिक–पत्रस्य उदाहरणम्

(1) ॐ

(2) दिनाङ्कः ................
नवदेहली

(3) आदरणीयेषु मातापितृचरणेषु

(4) सादरं वन्दनानि

(5) अत्र कुशलं तत्र अस्तु। (6) भवतां पत्रं ह्यः एव आगतम्। पत्रं पठित्वा गृहस्य सर्वमपि वृत्तं ज्ञातवान्। अस्माकम् अध्ययनम् सम्यक् प्रचलति। अर्द्धवार्षिकीं परीक्षां दत्वा अहं शीघ्रमेव गृहम् आगमिष्यामि।

(7) शेषं सर्वं कुशलम्। भवतां पत्रोत्तर–प्रतीक्षायां भविष्यामि।

(8) भावत्कः पुत्रः
देवानन्दः

**इदानीं वयं वैयक्तिक–पत्रलेखनाय प्रतिभागं किञ्चिद् विचारयामः।**

**(1) माङ्गलिकं पदम्–**

✉ **वैयक्तिक–पत्रस्य प्रारम्भे प्रायः मङ्गलसूचकं पदं लिखामः।**

यथा– (i) श्रीः
(ii) ओम्
(iii) ॐ नमः शिवाय
(iv) ॐ नमः गणेशाय
(v) श्री गुरवे नमः

एताः पत्रस्य शीर्षिकाः सन्ति।

2. स्थानं दिनाङ्कः च ।

✉ शीर्षिकां लिखित्वा यः पत्रं लिखति, सः स्वकीयं पत्र–सङ्केतं लिखति ।
✍ अधोलिखितपत्रसङ्केतं पठन्तु, तदनुसारं प्रश्नानाम् उत्तराणि लिखन्तु–

ॐ

दिनाङ्कः– 10–10–2001
115, कृष्ण नगरम्
जयपुरम्

........................

........................

........................................................................ ।

..................................................................................................
.......................................................................... ।

............................................ ।

......................
...............
.........

## अभ्यासः – 298

प्र०– 1. यः पत्रं लिखति सः कुत्र वसति ?

यथा– उ० *यः पत्रं लिखति सः जयपुरे वसति* ...................... ।

प्र०– 2. कृष्णनगरं कुत्र अस्ति ?

उ० ...................................................................... ।

प्र०– 3. यः पत्रं लिखति तस्य गृह–संख्या का अस्ति ?

उ० ...................................................................... ।

प्र०– 4. यः पत्रं लिखति सः पत्रसङ्केतं कुत्र लिखति, दक्षिणे कोणे / वामे कोणे वा ?

उ० ...................................................................... ।

3-4. सम्बोधनम्, अभिवादनम्, आशीर्वचनं, वा- *(यं प्रति लिखामः तं प्रति)*

**अधोलिखितां तालिकां पठन्तु–**

| यं प्रति | सम्बोधनम् | नमस्कारः / अभिवादनम् / आशीर्वचनं वा |
|---|---|---|
| मित्रं प्रति | प्रिय वयस्य ! | सस्नेहं नमस्ते |
| गुरुजनान् प्रति | परमपूज्यगुरुवर्याः ! | सादरं प्रणामाः |
| शिष्यं प्रति | प्रिय शिष्य ! | शुभाशिषः |
| जनकं प्रति | परमपूज्यपितृमहाभागाः ! | सादरं प्रणमामि |
| अम्बां प्रति | परमपूज्ये अम्ब ! | सादरं चरणवन्दनानि |
| भगिनीं प्रति | प्रिये भगिनि ! | सस्नेहप्रणामाः |
| अनुजं प्रति | प्रिय अनुज ! | आशीर्वादाः |
| सखीं प्रति | प्रिये सखि ! | नमस्ते |
| .................... | .................... | .................... |

**अभ्यासः – 299**

**अधोलिखितां सारणीं पूरयन्तु–**

| यं प्रति | सम्बोधनम् | नमस्कारः / अभिवादनम् / आशीर्वचनं वा |
|---|---|---|
| अम्बां प्रति | .......................... | .......................... |
| जनकं प्रति | .......................... | .......................... |
| गुरुं प्रति | .......................... | .......................... |
| अग्रजं प्रति | .......................... | .......................... |
| अनुजं प्रति | .......................... | .......................... |
| भगिनीं प्रति | .......................... | .......................... |
| मित्रं प्रति | .......................... | .......................... |
| सखीं प्रति | .......................... | .......................... |
| पितामहं प्रति | .......................... | .......................... |
| पितामहीं प्रति | .......................... | .......................... |

## 5. कुशलम्

(i) **पत्रस्य प्रारम्भे कुशलनिवेदनम् एवं कुर्मः–**
**यथा–** अहम् अत्र कुशली।

- ◆ भवान् / भवती अपि सकुशलः / सकुशला इति विश्वसिमि / चिन्तयामि।
- ◆ अत्र कुशलं / शं तत्र अपि अस्तु।
- ◆ ईश्वरस्य कृपया अत्र सर्वे कुशलिनः।
- ◆ तत्र सर्वं कुशलं खलु ?

(ii) **पत्रस्य उत्तरे यत् लिखामः तस्य उदाहरणं पठन्तु–**

- ◆ भवतः पत्रं प्राप्तम्।
- ◆ भवान् संस्कृतं पठति इति ज्ञात्वा अतीव प्रसन्नः अस्मि।
- ◆ पत्रस्य उत्तरे विलम्बः जातः। क्षमायाचनां करोमि।
- ◆ पत्रं पठित्वा चिन्ता जाता। किमपि निदानाय लिखामि।
- ◆ वर्धापनपत्रं प्राप्तवान् / प्राप्तवती। धन्यवादः।

### अभ्यासः – 300

✍ **रिक्तस्थानानि पूरयन्तु–**

| पत्रस्य आरम्भे | पत्रस्य उत्तरे |
|---|---|
| (i) अत्र कुशलं / शं ....................। | (i) ............................ पत्रं प्राप्तम्। |
| (ii) अहम् अत्र ..........................। | (ii) वर्धापनपत्रं .............। .............। |
| (iii) ईश्वरस्य कृपया .......................। | (iii) पत्रस्य उत्तरे ...........। .............। |
| (iv) तत्र सर्वं ........................... ? | (iv) पत्रं पठित्वा ...........। .............। |
| (v) भवान् अपि .......... इति चिन्तयामि। | (v) भवतः परीक्षापरिणामं पठित्वा ...........। |

## 6. सन्देशः

सन्देशे विविधप्रकारकाणां समाचाराणाम् आदानं प्रदानं च भवति। तद् भवान् स्वयमपि लेखितुं शक्नोति।

7. उपसंहृतिः

✍ पत्रस्य समापने प्रायः लिखामः–

(i) सर्वेभ्यः मम प्रणामाः।

(ii) अनुजाय / अनुजायै आशीर्वादाः।

(iii) कृपया शीघ्रम् एव पत्रोत्तरं प्रेषयन्तु।

(iv) शेषं पुनः लेखिष्यामि।

(v) काले काले पत्रेण स्ववृत्तान्तं सूचयन्तु।

## अभ्यासः – 301

1. भवतां मित्रं रुग्णम् अस्ति। पत्रस्य अन्ते भवन्तः किं लेखिष्यन्ति इति शुद्धम् उत्तरं चिह्नितं कुर्वन्तु–

- शेषं पुनः लेखिष्यामि। ☐
- कदाचित् पत्रेण स्ववृत्तान्तं सूचयतु। ☐
- शीघ्रमेव स्वस्वास्थ्यविषये सूचयतु। ☐

2. भवतः विद्यालये वार्षिकी परीक्षा आसीत्। जनकं प्रति भवान् / भवती पत्रं लिखति। परिणामं च सूचयति। अन्ते किं लेखिष्यति / शुद्धम् उत्तरं चिह्नितं करोतु–

- मम विषये चिन्तां न कुर्वन्तु। ☐
- पत्रोत्तरं शीघ्रं यच्छन्तु। ☐
- अहम् अत्र कुशली / कुशलिनी। भवत्कृते स्वास्थ्यम् इच्छामि। ☐

3. भवतः मित्रस्य विवाहः निश्चितः जातः। तं वर्धापयितुं भवान् / भवती छात्रावासतः पत्रं लिखति। पत्रस्य अन्ते कथं समापनं करिष्यति इति शुद्धोत्तरं चिह्नितं करोतु–

- तस्य दिनस्य उत्सुकतया प्रतीक्षां करोमि। ☐
- पत्रं पठित्वा अहम् अतीव प्रसन्नः / प्रसन्ना अभवम्। ☐
- भगवतः कृपया अत्र सर्वं कुशलम्। ☐

8. **प्रेषकस्य परिचयः–**

**यः पत्रं लिखति, सः स्वपरिचयम् अपि लिखति ततः हस्ताक्षरं करोति।**

📖 **परिचयं कथं लिखामः ? इति प्रश्ने अधोलिखिततालिकां पठन्तु–**

| | यं प्रति | | प्रेषकस्य परिचयः |
|---|---|---|---|
| (i) | जनकं प्रति / अम्बां प्रति | | *भवदीयः पुत्रः /* |
| | | ह० | ........................ |
| | | | *भवदीया पुत्री* |
| | | ह० | ........................ |
| (ii) | मित्रं प्रति | | *भवदीयः प्रियसखा /* |
| | | ह० | ........................ |
| | | | *भवदीया प्रियसखी* |
| | | ह० | ........................ |
| (iii) | गुरुं प्रति | | *भवताम् आज्ञाकारी शिष्यः /* |
| | | ह० | ........................ |
| | | | *भवताम् आज्ञाकारिणी शिष्या* |
| | | ह० | ........................ |
| (iv) | अनुजं प्रति | | *भवतः शुभाकाङ्क्षी /* |
| | | ह० | ........................ |
| | | | *भवतः शुभाकाङ्क्षिणी* |
| | | ह० | ........................ |
| (v) | अग्रजं प्रति | | *भवतः अनुजः / अनुजा* |
| | | ह० | ........................ |

## अभ्यासः – 302

**अधोलिखितान् प्रति परिचयशब्दान् लिखन्तु–**

(i) आचार्यां प्रति ..............................
रमा

(ii) अम्बां प्रति ..............................
सुरेशः

(iii) अनुजां प्रति ..............................
सुकान्ता

(iv) अग्रजं प्रति ..............................
प्रणवः

(v) जनकं प्रति ..............................
सुषमा

---

स्वीकर्तुः पत्रसङ्केतः–

---

**पत्रसङ्केते अपेक्षितः क्रमः–**

| | |
|---|---|
| (i) आदरसूचकः शब्दः | श्री / श्रीमान् / श्रीमती / कुमारी |
| (ii) स्वीकर्तुः नाम | रामस्वरूप वर्मा |
| (iii) गृहसंख्या / खण्डसंख्या | 4 |
| (iv) मार्ग–संख्या | 6 (यदि स्यात्) |
| (v) ग्रामस्य नाम | नाग (यदि स्यात्) |
| (vi) पत्रालयः | तामली (यदि स्यात्) |
| (vii) मण्डलस्य नाम | चम्पावतम् (यदि स्यात्) |
| (viii) प्रदेशस्य नाम | उत्तराञ्चलः |
| (ix) देशस्य नाम | भारतम् (विदेशात् एव) |
| (x) पत्रालयकूटसंख्या | ☐☐☐☐☐☐ |

प्रायः नगरेषु ग्रामस्य, पत्रालयस्य मण्डलस्य च नाम न लिखामः। अपितु उपनगरस्य, नगरस्य, प्रदेशस्य नाम एव लिखामः। यदा विदेशात् पत्रं लिखामः तदा देशस्य नाम अपि लिखामः।

## अभ्यासः – 303

1. **अग्रे लिखितं पत्रसङ्केतं पठन्तु। तदनुसारं यथोचितं रिक्तस्थानानि पूरयन्तु–**

श्री रामप्रकाश शुक्लः
40/2, मार्गसंख्या 6,
कैलाशनगरम्,
वृन्दावनम्, मथुरा
उत्तरप्रदेशः | 2 | 8 | 1 | 1 | 2 | 1 |

(i) आदरसूचकः शब्दः ..................
(ii) नाम ..................
(iii) गृहसंख्या ..................
(iv) मार्गसंख्या ..................
(v) ग्रामस्य नाम ..................
(vi) पत्रालयस्य नाम ..................
(vii) मण्डलस्य नाम ..................
(viii) उपनगरस्य नाम ..................
(ix) नगरस्य नाम ..................
(x) प्रदेशस्य नाम ..................
(xi) देशस्य नाम ..................
(xii) पत्रालयकूटसंख्या ..................

2. **अत्र किं न पूरितम् अस्ति–**

डॉ० महेन्द्ररावः ..................
प्लाट–संख्या – 65, मार्ग–संख्या – 5,
वेङ्कटरमण कालोनी, नागोल,
रंगारेड्डीमण्डलम्, आन्ध्रप्रदेशः
| | | | | | |

3. **अत्र किं त्यक्तम् अस्ति–**

श्रीमती कमला भारतीय ..................
ग्राम– तिलकपुरः, पत्रालयः– बामदेव बाजार,
मण्डलम्– वाँका (        )
| 8 | 1 | 3 | 1 | 0 | 7 |

4. सुश्री सीमा राव ..................
प्लाट–संख्या– 10, ग्रीक्षेम कालोनी,
उड़ीसा

| 7 | 5 | 2 | 0 | 0 | 2 |
|---|---|---|---|---|---|

5. श्री ..................................
छात्रावासः, प्रकोष्ठसंख्या, 40, ..................
संस्कृत अकादमी, द्वारका,
जामनगरम्, गुर्जरप्रदेशः

| 1 | 3 | 3 | 6 | 3 | 5 |
|---|---|---|---|---|---|

## पत्रप्रारूपम्–

✉ **सखीं प्रति दिनचर्याविषये पत्रलेखनम्–**

ॐ

छात्रावासः
जम्मू
विक्रमसंवत्–2058
श्रावणपूर्णिमा
तदनुसारम्
दिनाङ्कः–02/10/01

प्रियसखि विनीते !

सस्नेहं नमस्ते।

अत्र सर्वगतं कुशलम्। भवती अपि स्वस्था इति मम आशा। भवती दिनचर्यां ज्ञातुम् इच्छति। अतः लिखामि।

अत्र अहं पञ्चवादने उत्तिष्ठामि। सार्धपञ्चवादनात् सार्धषड्वादनपर्यन्तं व्यायामं करोमि। अष्टवादनतः अध्यापनं प्रचलति। मध्याह्ने एकवादने भोजनावकाशः। सायं पादोनचतुर्वादने क्रीडामि। सार्धसप्तवादने सन्ध्यादिकं कृत्वा भोजनाय गच्छामि।

दशवादनपर्यन्तं पठामि। अत्र मम सर्वाः अपि सहपाठिन्यः सहयोगेन प्रेमपूर्वकं वसन्ति। अहम् अतीव प्रसन्ना अस्मि। शिक्षकगणाः अपि अस्मासु पितृवत् स्निह्यन्ति। इति शम्।

सर्वेभ्यः नमः। मां न विस्मरतु। यदा कदाचित् पत्रेण वार्तां सूचयतु।

*भवदीया प्रियसखी*
अवन्तिका

पत्रसङ्केतः
कुमारी स्नेहप्रभा
ई/डी 94, टैगोरगार्डन,
नवदेहली | 1 | 1 | 0 | 1 | 2 | 7 |

## अभ्यासः – 304

**पत्रं पठित्वा अधोलिखितप्रश्नान् उत्तरन्तु–**

(i) पत्रं का लिखति ?
(ii) पत्रं कुतः लिखति ?
(iii) यां प्रति पत्रं लिखति सा कुत्र वसति ?
(iv) सा सम्बोधने किं लिखति ?
(v) कुशलसूचकं वाक्यं पुनः लिखत ?
(vi) पत्रे कस्याः वर्णनम् अस्ति ?
(vii) अवन्तिका व्यायामं कदा करोति ?
(viii) छात्रावासे छात्राः मध्याह्ने कदा भोजनं कुर्वन्ति ?
(ix) पत्रस्य अन्ते यत् वाक्यं लिखितं तत् पुनः लिखन्तु।
(x) अवन्तिकायाः सखी कुत्र वसति ?
(xi) पत्रं कस्यां तिथौ लिखितम् ?
(xii) हस्ताक्षरेभ्यः पूर्वं ये परिचयशब्दा लिखिताः तान् अत्र लिखन्तु ?
..................................।

**उदाहरणरूपेण अत्र कतिचन उदाहरणानि दत्तानि सन्ति। तानि सम्यक् परिशीलयन्तु–**

**1. जनकं प्रति पुत्रः–**

।। श्री ।।

विद्यारण्यपुरम्
चैन्नै – 14
02.02.94

परमपूज्यानां पितृचरणानां पादयोः साष्टाङ्गप्रणामाः।

अत्र अहं कुशली। तत्रापि भवन्तः सर्वे कुशलिनः इति भावयामि। अत्र मम अध्ययनं सम्यक् प्रचलति। अर्धवार्षिकी परीक्षा समाप्ता। परिणामः अपि प्रकटितः। सर्वविषयेषु अपि उत्तमाः अङ्काः आगताः सन्ति। गणिते केवलं 70 अङ्कान् प्राप्तवान् अस्मि। अग्रिमकाले गणितार्थम् अधिकम् अवधानं ददामि।

अत्र मम आरोग्यं सम्यक् अस्ति। मम विषये चिन्तां मा कुर्वन्तु। गृहस्य स्मरणं सदा भवति। अत्र मम मित्राणि उत्तमानि सन्ति। तैः सह स्नेहेन आनन्देन च अस्मि।

जनन्यै मम साष्टाङ्गप्रणामाः। भगिन्यै शुभाशीर्वादाः। पत्रं लिखन्तु।

भवदीयः पुत्रः
*रविः*

**2. जनकः पुत्र्यै–**

ॐ

लक्ष्मणपुरी
14.09.97

प्रिये वत्से !
अनेके शुभाशयाः।

मन्ये भवती कुशलिनी इति। भवत्याः गृहे सर्वे कुशलिनः खलु ? भवत्याः जननी सर्वदा भवतीं स्मरति। भवत्याः पुत्रस्य परीक्षा कदा भविष्यति ? ग्रीष्मविरामस्य आरम्भः कदा भविष्यति ? विरामावसरे भवती पुत्रेण सह अत्र आगच्छतु। भवत्याः सख्यः अपि भवतीं बहु स्मरन्ति। भवत्याः श्वशुरस्य आरोग्यम् इदानीं कथम् अस्ति ? तस्मै मम नमस्कारान् सूचयतु। अन्यत् सर्वं कुशलम्। गृहे सर्वेभ्यः मम नमस्काराः। सौरभाय शुभाशिषः।

*भवदीयः पिता*
**रामप्रकाशः**

3. पतिः पत्न्यै –

।। श्रीमात्रे नमः ।।

हरिद्वारम्
माघ–शुद्धद्वादशी

प्रियश्रीमत्यै,

अद्य भवत्याः पत्रं प्राप्तवान्। अहं कुशली एव। भवन्तः सर्वे कुशलिनः इति भावयामि। मम कार्यालयस्य कार्यं सम्यक् प्रचलति। अहं प्रतिदिनं नूतनान् अनुभवान् प्राप्नोमि। भवत्याः स्मरणं सर्वदा भवति। अत्रत्यं मम कार्यं अस्मिन् सप्ताहे न भवेत् इति भाति। अहं प्रायशः अग्रिमरविवासरे गृहम् आगमिष्यामि। राहुलस्य जन्मदिने अवश्यं तत्र भविष्यामि इति तं वदतु। माता समये औषधादिकं स्वीकरोति खलु ? तस्याः विषये भवती अवधानं ददाति इति मम विश्वासः अस्ति। राहुलः यत् पुस्तकम् इष्टवान् तत् क्रीतवान् अस्मि। अन्यत् सर्वं कुशलम्। भवत्याः स्वास्थ्यविषये निर्लक्ष्यं न करोतु।

*भवदीयः*
**हरीशः**

4. मित्रस्य पत्रस्य उत्तरम् –

।। जय श्रीराम ।।

भोपाल

04.06.95

प्रिय वरुण !

अहम् अत्र कुशली। भवतः पत्रं दृष्ट्वा मम महान् सन्तोषः जातः। भवान् तरणस्पर्धायां सुवर्णपदकं प्राप्तवान् इति ज्ञात्वा महान् सन्तोषः जातः। सफलतायै अभिनन्दनम्। तरणाभ्यासः सम्यक् प्रचलति खलु। किं रे। पूर्वं भवान् मीनः आसीत् वा ? भवान् सम्यक् परिश्रमं करोति फलमपि प्राप्नोति अतः मम बहु आनन्दः अभवत्। गृहे सर्वे कथं सन्ति ? मम जननी भवन्तं बहु स्मरति। विरामकाले भवन्तम् आगन्तुं सूचितवती अस्ति। अन्यत् सर्वं कुशलम्। पत्रं लिखीत खलु।

भवदीयः स्नेहाङ्कितः
**प्रदीपः**

## अभ्यासः – 305

अधोलिखितशब्दान् उचिते स्तम्भे पूरयन्तु–

| | | | | |
|---|---|---|---|---|
| जय श्रीरामः | शुभाशयाः | आदरणीय गुरो ! | कथमस्ति भवान्? | नमस्काराः, |
| ॐ | भूयांसि नमांसि | सादरं वन्दे | 14.12.82 | प्रिय शिष्य |
| सादरं वन्दे | धन्यवादा | श्रीः | इति भवदीया | राकेशः |
| 5.6.97 | श्रीगुरुभ्यो नमः | आत्मीये लते | चन्द्रपालः | प्रिय मित्र ! |
| गोरखपुरम् | प्रिय अम्ब | आदरपूर्वकाः प्रणामाः | शशाङ्कः | जनन्यै नमः |
| इति प्रियमित्रम् । | पटना | | | |

| शीर्षिका | सम्बोधनम् | अभिवादनम् | समाप्तिः | हस्ताङ्कनम् |
|---|---|---|---|---|
| | | | | |

## अभ्यासः – 306

पत्रस्य विषयं पठित्वा शीर्षक–सम्बोधन–समाप्त्यादिकम् विचारयन्तु–

............

...............

..............,

..........................

कथमस्ति भवान् ? मां स्मरति खलु। मम अम्बा सर्वदा गिरीशस्य पत्रम् आगतं न वा ? इति पृच्छति। भवतः पठनं कथं प्रचलति ? देहल्याः वातावरणं भवान् जानात्येव। इदानीं बहु शैत्यम् अस्ति। अत एव प्रातः शीघ्रं न उत्तिष्ठामि। परश्वः (18–09–94) मम विद्यालये भाषणस्पर्धा भविष्यति / अहम् अपि भागं ग्रहीष्यामि। 'अरुण ! उत्तिष्ठतु' इति दशवारम् अम्बा माम् आह्वयति। अहम् तदनन्तरमेव उत्तिष्ठामि। भवतः स्नेहमयव्यवहारं सर्वदा स्मरामि। भवादृशमित्राणि विरलतया एव लभ्यन्ते। अन्यत् सर्वं कुशलम्। भवतः मातापितृभ्यां मम नमस्काराः। पत्रं लिखतु।

......................

.................

# शुभाशयाः

## दीपावली शुभाशयाः

- दीपावली भवतां जीवने उन्नत्याः
  समृद्धेः प्रकाशं पूरयतु ।
- शुभं करोतु कल्याणमारोग्यं धनसम्पदः ।
  शत्रुबुद्धिविनाशाय दीपज्योतिर्नमोऽस्तु ते ।
- दीपज्योतिः परं ब्रह्म दीपज्योतिर्जनार्दनः ।
  दीपो हरतु मे पापं दीपज्योतिर्नमोऽस्तु ते ।।

## युगादिशुभाशयाः

- नववर्षं नवचैतन्यं ददातु ।
- भूयात् नूतनवत्सरः शिवमयः शान्तिप्रदः श्रीमताम् ।
- भवतां नववर्षम् उल्लासपूर्णं भवेत् ।
- सफलतायै अभिनन्दनम् ।
- शतं जीव शरदो वर्धमानः ।
- पुत्रोत्पत्तौ वर्धापनानि ।
- भवतोः दाम्पत्यजीवनं सुखमयं भूयात् ।
- मकरसङ्क्रान्तिशुभाशयाः ।
- होलिकोत्सवस्य शुभकामनाः ।
- रक्षाबन्धनोत्सवे हार्दिक्यः शुभकामनाः ।
- संस्कृतदिवसस्य शुभाशयाः ।
- नित्यं प्रीतिकराः भवन्तु भवतां
  सर्वेऽनुकूला ग्रहाः ।
- 'ईद' उत्सवस्य शुभाशयाः ।
- क्रिस्मस' दिवसस्य हार्दिकी शुभकामना ।
- सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।
  सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत् ।
- शुभाः ते सन्तु पन्थानः ।
- भवदीयः समारम्भः यशस्वी भवतु ।
- करोतु भव्यं भवतां रमेशः ।

### 6.4.2 व्यावसायिककार्यालयीय–पत्राणि

भवन्तः इदानीं व्यक्तिगतपत्राणि लेखितुं जानन्ति। कानिचित् पत्राणि व्यावसायिकानि कार्यालयीयानि वा भवन्ति।

यथा– क. पुस्तकविक्रेतारं प्रति पुस्तकक्रयणार्थम्।

ख. दूरदर्शनस्य निदेशकं प्रति संस्कृतनाटकानां प्रसारणार्थम्।

ग. पत्रिकासम्पादकं प्रति ग्राहकतायै।

घ. समाचारपत्रस्य सम्पादकं प्रति, उद्यानस्य दुरवस्थापरिहाराय।

ङ. प्रधानाचार्यं / प्रधानाचार्यां प्रति अवकाशस्य स्वीकरणाय। इत्यादयः।

ध्यानेन पठन्तु–

## पत्रप्रारूपम्

द्वारा–

विष्णुकान्त मिश्रः<br>
कक्षसंख्या – 7, छात्रावासः,<br>
सम्पूर्णानन्द संस्कृत विश्वविद्यालयः<br>
जगतगंजः<br>
वाराणसी, उत्तरप्रदेशः<br>
पत्राचारकूटसंख्या – 221 002

सेवायाम्,

मान्यवर निदेशकमहोदय,<br>
राष्ट्रिय संस्कृत संस्थानम्<br>
56 – 57, इन्स्टीट्यूशनल एरिया,<br>
डी ब्लाक, जनकपुरी, नवदेहली – 110 011

विषयः– संस्थानेन प्रकाशितानां संस्कृतशिक्षणपुस्तकानां क्रयणसन्दर्भे

महोदय,

राष्ट्रिय-संस्कृत-संस्थानेन प्रकाशितां संस्कृतशिक्षणपुस्तकमालाम् अहं क्रेतुम् इच्छामि। कृपया सम्पूर्णपाठ्यक्रमस्य प्रतिकृतिद्वयं वी० पी० पी० द्वारा प्रेषयितुं व्यवस्थां कुर्वन्तु इति निवेदयति।

सधन्यवादम्

भवदीयः

...........................

*(विष्णुकान्त मिश्रः)*

वाराणसी
02.10.2001

## पत्रसङ्केतः

सेवायाम्,

.......................................
.......................................
................. | | | | | | |

द्वारा–

.......................................
.......................................
................. | | | | | | |

## व्यावसायिक / कार्यालयीयपत्र–प्रारूपम्

सकाशात्,
..........................
..........................
..........................
..........................

I. लेखकस्य सङ्केतः

सविधे,
..........................
..........................
..........................
..........................

II. स्वीकर्तुः सङ्केतः

विषयः– ............................................................

III. विषयनाम

.........................,

IV. सम्बोधनम्

............................................................................................
............................................................................................
............................................................................................
............................................................................................।

V. प्रतिपाद्यः विषयः

VI. उपसंहारः

........................
........................

VII. हस्ताङ्कनं पदं च

........................
........................

........................
........................
........................

VIII. स्थलम्, दिनाङ्कः

I. पत्रस्य आदौ उपरितनभागे पत्रलेखकस्य सङ्केतः लेखनीयः भवति। लेखकस्य पदनिर्देशः अपि कृतः चेत् उत्तमम्।

II. स्वीकर्तुः सङ्केतः लेखकस्य सङ्केतस्य अधोभागे भवति। स्वीकर्तुः नामलेखनम् अनिवार्यं न। पदोल्लेखः अवश्यं करणीयः भवति।

III. स्वीकर्तुः सङ्केतस्य अधोभागे विषयनाम इति भागः भवति। तत्र यस्मिन् विषये पत्रं लिख्यमानम् अस्ति एकवाक्येन सः विषयः लिखितः भवति।

IV. पत्रस्वीकर्तुः पदम् उल्लिख्य तस्य सम्बोधनं भवति।

यथा– सम्पादकमहाशय,
मान्‍नीय – प्रधानमन्त्रिमहोदय,
आदरणीय – निदेशक महोदय
मान्याः

V. विषयभागे साक्षात् विषयस्य उपस्थापनं भवति। कुशलप्रश्नादिकं वैयक्तिकपत्रे न भवति।

VI. उपसंहारः इति भागे सामान्यतः 'भवदीयः भवदीया इत्यादयः भवन्ति।

VII. हस्ताङ्कनस्थाने हस्ताङ्कनेन सह पदनिर्देशः अपि भवति।

VIII. अधः वामभागे स्थलनिर्देशः भवति। तस्य एव अधः पत्रप्रेषणस्य दिनाङ्कः अपि भवति।

कार्यालयीयं पत्रम्

## विरामार्थं प्राचार्याय प्रार्थना पत्रम्

सकाशात्,
रामप्रसादशर्मा
संस्कृताध्यापकः
पाणिनिसंस्कृतमहाविद्यालयः,
गोरक्षपुरम्

सविधें,
प्राचार्यः
पाणिनिसंस्कृतमहाविद्यालयः
गोरक्षपुरम्

**विषयः– भगिन्याः विवाहार्थं दिनद्वयस्य विरामाय प्रार्थना**

आदरणीय प्राचार्यमहोदय,

मम भगिन्याः विवाहः 18–08–96 दिनाङ्के भविष्यति। तस्मिन् कार्यक्रमे मम उपस्थितिः अनिवार्या अस्ति इति कारणतः 17, 18 च दिनयोः अहं विद्यालये उपस्थातुं न शक्ष्यामि। अतः 17, 18 दिनद्वयं विरामं यच्छतु इति निवेदयति।

*भवदीयः विधेयः*
**रामप्रसादशर्मा**
(संस्कृताध्यापकः)

गोरक्षपुरम्
15–08–96

## पत्रिकासम्पादकाय।

सम्पादकः,
'सम्भाषणसन्देशः' मासपत्रिका
बेङ्गलूरू – 25

मान्याः,

प्रतिमासं सम्भाषणसन्देशं पठामि। गतमासस्य पत्रिकायां प्रकटीकृतं **'सारस्वतीयं खलु सिन्धुसंस्कृतिः'** इति लेखः बहु उत्तमः अस्ति। एषः लेखः इतिहासस्य पुनश्चिन्तनाय मनसः प्रवर्तनं करोति। ईदृशान् लेखान् सर्वदा अधिकाधिकं प्रकाशयन्तु इति निवेदयामि।

*भवदीयः*
***रामचन्द्रः***
इन्दौर (मध्यप्रदेशः)

## अभ्यासः – 307

✍ अधोलिखितविषयान् अधिकृत्य पत्राणि लिखन्तु।

1. जनकः पुत्रं प्रति– परीक्षा सन्निहिता अस्ति। 'परीक्षार्थं कथं पूर्वसज्जा करणीया' इत्यस्मिन् विषये जनकः मार्गदर्शनं करोति। पठनार्थम् अवधातव्यान् अंशान् ज्ञापयति।

2. पुत्री जनकं प्रति– पुत्री गृहे वसति। तत्रत्यां दिनचर्यां विवृत्य जननीं प्रति पत्रं लिखति। नूतनाभिः सखीभिः सह प्राप्तान् अनुभवान् जनन्यै लिखति।

3. सहोदरः सहोदरीं प्रति– जनकस्य अस्वास्थ्यविषये सहोदरः सहोदर्यै पत्रं लिखति। किं जातम् आसीत्? किं कृतम् ? तस्य स्थितिः कथम् अस्ति' इत्यादिकं विवृत्य एकवारम् आगत्य मिलतु इति सूचयति।

4. पुत्री जनकाय– पुत्रस्य जन्मदिनोत्सवः: निश्चितः। दिनाङ्कादिकं संसूच्य जनकं जननीं च शीघ्रम् आगन्तुं प्रार्थयति।

5. सखी सखीं प्रति– ग्रामस्य वातावरणं विवृत्य विरामसमये स्वग्रामम् आगन्तुं प्रेरयति।

6. प्रथमस्थानं प्राप्तवते मित्राय– कौशिकाय, सत्यजित् अभिनन्दनपुरस्सरं पत्रं प्रेषयति।

7. दीपावलीशुभाशयान् संसूच्य अग्रजाय– सुमन्त्रः पत्रं प्रेषयति।

8. पत्रिकासम्पादकाय– कश्चित् लेखकः लेखं सम्प्रेष्य प्रकाशनार्थं निवेदयति।

9. दूरदर्शनकेन्द्रतः प्रसारितस्य संस्कृतनाटकस्य प्रशंसां कृत्वा निदेशकाय– कश्चित् संस्कृतप्रेमी पत्रं लिखति।

10. जलमण्डल्यै– जलपूरणव्यवस्थायां जातस्य विघ्नस्य निवारणार्थं श्रीनिवासनगरस्य जनाः निवेदनं कुर्वन्ति।

★★★

